# ॥ दत्तकमीमांसा ॥



## ॥ दत्तकचन्द्रिका ॥

श्रीधर्म्माधिकारिरामपण्डितात्मज

श्रीनन्दपण्डितविरचिता ॥

साधारणविद्योत्कर्षार्थकसमाजाधिपतीनामाज्ञया

कलिकाताराजधान्यां इडुकेशनमुद्रायन्त्रालये

मुद्रिताभूत्।

१८३४

धर्मशास्त्र

# ॥ दत्तकमीमांसा ॥




॥ श्रीगणेशाय नमः ॥

अभिनन्द्य जगद्वन्द्यपदद्वन्द्वविनायकं। पुत्त्रीकरणमीमांसां कुरुते नन्द पण्डितः॥ १ ॥ केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः। विविच्य नोक्तं यत्पूर्व्वैस्तदशेषमिहोच्यते ॥ २ ॥

तत्त्राहात्त्रिः॥ अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदा। पिण्डोदकक्रिया हेतोर्यस्मात्तस्मात्प्रयत्नत इति॥ अपुत्त्रोऽजातपुत्त्रो मृतपुत्त्रो वा। अपुत्त्रो मृत पुत्त्रोवा पुत्त्रार्थं समुपोष्य चेति शौनकीयात्। वन्ध्यो मृतप्रजो वापीति पाठा न्तरं। अपुत्त्रेणेति। अपुत्त्रताया निमित्तताश्रवणात्पुत्त्राकरणे प्रत्यवायोऽवगम्यते। पुत्त्रोत्पादनविधेर्न्नित्यतया तल्लोपस्य प्रत्यवायनिमित्ततापर्य्यवसानात्। ना पुत्त्रस्य लोकोऽस्तीति पुत्त्रसामान्याभाव एवालोकताश्रवणात्। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते। ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्त्री यज्वा ब्रह्मचारी चेत्यत्रापि पुत्त्रसामा न्यस्यानृण्यहेतुताश्रवणाच्च। अपुत्त्रेणैवेत्येवकारेण पुत्त्रवतो नाधिकारो बोधितः। अनेन माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदीत्यापत्पद मपि मानवीयं व्याख्यातं। व्याख्यातं चापरार्क्केणापि। तथा आपदि प्रतिग्रही तुरपुत्त्रत्व इति। यद्वा आपदि दुर्भिक्षादावापद्ग्रहणादनापदि न देयो दातुरयं प्रतिषेध इति मिताक्षरा॥ तथाच कात्यायनः। आपत्काले तु कर्त्तव्यं दानं विक्र य एव वा। अन्यथा न प्रकर्त्तव्यमिति शास्त्रविनिश्चय इति। मनुरपि। अपुत्त्रेण

सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसङ्कीर्त्तनाय च। अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकामिति। यत्तु। विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहलिङ्गदर्शनं तदपुत्त्रेणेत्यादिश्रुतिविरोधात्। अजाघनीभक्षणादिवन्न श्रुत्यनुमापकमिति ध्येयं। नच स्मार्त्ताश्रुतिः श्रौतस्य लिङ्गस्य न बाधिकेति वाच्यं। नापुत्रस्य लोकोऽस्तीत्यादिप्रत्यक्षश्रुत्युपष्टम्भेन तस्या एव बलवत्त्वात्। अथापि स्मार्त्तश्रुतितः श्रौतलिङ्गबलवत्त्व एव श्रौतताग्रहातिशयश्चेत् तर्हि पुत्रानुज्ञया पुत्रवतोप्यस्तु पुत्रान्तरपरिग्रहाधिकारः। यतः पिता मन्त्रानीते तस्मिंस्तिष्ठामहे वयम्। पुरस्तात्सर्व्वे कुर्म्महे त्वामन्वञ्चो वयं स्महीति श्रौतलिङ्गात्। नचेदं ज्येष्ठीकरणे लिङ्गं न पुत्रीकरण इति वाच्यं तस्य तदभावेनैवासिद्धेरित्यलं पल्लवितेन॥ अपुत्त्रेणेति पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम्। पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपमिति पौत्रादिना विशिष्टलोकप्रतिपादनेन नापुत्रस्य लोकोऽस्तीत्याद्यलोकता परिहारात्। नच पिण्डोदकदानार्थं तत्करणमिति वाच्यम्। पुत्रः पौत्रः प्रपौत्रस्य तद्वद्वा भ्रातृसन्ततिरित्यनेन तयोरेव तदधिकारावगमात्। अपुत्रेणेति पुंस्त्वश्रवणात् न स्त्रिया अधिकार इति गम्यते॥

अतएव वशिष्ठः॥ न स्त्री पुत्रन्दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति। अनेन विधवाया भर्त्रनुज्ञानासम्भवादनधिकारो गम्यते। न च सधवायाः स्वभर्त्रनुज्ञापेक्षापारतन्त्र्यान्न विधवाया इतिवाच्यम्। स्त्रीसामान्योपादानेन पारतन्त्र्यस्याप्रयोजकत्वात्। अभावे ज्ञातयस्तेषामिति ज्ञातिपारतन्त्र्यस्य सद्भावाच्च तर्हि ज्ञात्यनुज्ञयैव तस्याः पुत्रीकरणमस्त्विति चेन्न। भर्तृपदस्योपलक्षणतापत्तेः। प्रयोजनासिद्धेश्च प्रयोजनन्तु भर्त्रनुज्ञानस्य स्वीकृतपरिग्रहेणापि भर्तृपुत्रत्वसिद्धिः। अत एव। अथौरसक्षेत्रजदत्तकृत्रिमपुत्रिकापुत्रस्वोढारजासुराद्यूढजदक्षिणाजानां पित्रोर्द्वेति सत्याषाढसूत्रे स्वीदारजस्य गोत्रद्वयसम्बन्धोऽभिहितो मातुरस्तत्पितुः प्रथममिति सूत्रेणापि। पितृगोत्रसम्बन्धश्च पितुः पुत्रत्वेन। पुत्रत्वञ्च पित्रनुज्ञानेनैव न परिग्रहेण तस्य तत्र स्वीकर्तृकत्वात्। ऊढः सहोढः स्वीदारजः

स्त्रीयाचितः स्त्रीसत्ताकः यज्ञेन दक्षिणात्वेन प्राप्तायां कन्यायाञ्जातः दक्षिणाजः अन्येप्रसिद्धाः इति शबरस्वामिनः॥ अत्र च स्त्रिया दारताभिधानेन दारी पुरुषो लभ्यते अन्यथा स्त्रीपरिगृहीतस्य तन्मात्रपुत्रत्वेन तद्भर्तृगोत्रसम्बन्धाभावात्तद्भर्तृक्रियायामनधिकारापातात्॥ तद्विवाहादौ च पित्रभावेन पितृगोत्राद्यनुल्लेख प्रसङ्गाच्च। यद्येवं तर्हि भर्तुरपि स्त्र्यनुज्ञापेक्षा स्यात्प्रयोजनतौल्यादिति चेन्न। भर्तृप्राधान्यात्तत्परिग्रहेणैव स्त्रिया अपि तस्मिन् पुत्त्रत्वसिद्धेः। भर्तृपरिगृहीतवस्त्वन्तरस्वत्ववत्॥ किञ्च॥ व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति समानकर्तृकता बोधक क्त्वाप्रत्ययश्रवणात्। होमकर्त्तुरेव प्रतिग्रहसिद्धेः। स्त्रीणां होमानधिकारित्वात् प्रतिग्रहानधिकार इति वाचस्पतिः॥ नच शौनकीये आचार्य्यवरणाम्नानात् तद्द्वारा होमसिद्धिरिति वाच्यम्। होमसिद्धावपि प्रतिग्रहमन्त्रानधिकारेण प्रतिग्रहासिद्धेः।

तदाह शौनकः॥ देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनीति। नचैवं शूद्राणामनधिकारप्रसङ्गः शूद्राणां शूद्रजातिष्विति व्यवस्थापकलिङ्गेन तदधिकारकल्पनात्। एतेन शूद्राणां होमप्रतिग्रहमन्त्रानधिकारेण पुत्त्रपरिग्रहानधिकार इति वदन् वाचस्पतिः परास्तः। विधवानां स्त्रीणान्तु यथा विनियोगमधिकारसमर्थनान्न पुत्त्रपरिग्रहाधिकार इति सिद्धं नचैवं सधवानामप्यनधिकारापत्तिः होममन्त्राद्यनधिकारादिति वाच्यम्। अन्यत्रानुज्ञानाद्भर्त्तुरिति प्रतिप्रसवेन प्रधानाधिकारसिद्धावधिकृताधिकाराद्धोममन्त्रादिप्राप्तौ स्त्रीशूद्राणाममन्त्रकमिति मन्त्रपर्य्युदाससिद्धेरमन्त्रकप्रतिग्रहसिद्धिः। वस्त्वन्तरप्रतिग्रहवत्। किञ्च। न स्त्री पुत्त्रं दद्यात्प्रतिगृह्णीयाद्वेत्यौत्सर्गिकनिषेधस्य अन्यत्रानुज्ञानाद्भर्त्तुरित्यपवादकः प्रतिप्रसवः तत्र च निमित्तम्भर्त्रनुज्ञानम् ततश्च विधवाया भर्त्रभावे नानुज्ञानासम्भवान्निर्णिमित्तकप्रतिप्रसवाप्रवृत्त्या प्रापकान्तराभावाच्चानधिकार इति सर्व्ववादिसम्प्रतिपन्नमेव। नचैवमलोकतापरिहारो नस्यादिति वाच्यम्। मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता। स्वर्गं गच्छ

पुत्रापि यथा ते ब्रह्मचारिण इति मनुना ब्रह्मचर्य्येणैव तत्परिहारा भिधानादिति सकलमकलङ्कं। अपुत्रेणेत्येकत्वश्रवणाच्च न द्वाभ्यां त्रिभिर्वा एकः पुत्रः कर्त्तव्य इति गम्यते। नन्वेवं दत्तकादीनां द्व्यामुष्यायणत्वस्मरणं विरुध्येत। तथा च प्रयोगपारिजाते स्मृत्यन्तरम्। द्व्यामुष्यायणका ये स्युर्दत्तक क्रीतकादयः। गोत्रद्वयेप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति। नैवं द्व्यामुष्यायणत्वस्य जनकपरिग्रहीतृद्वयाभिप्रायकत्वात्। निषेधस्य परिग्रहीतृद्वयमभिप्रेत्येति न विरोधः प्रतिनिधिश्च क्षेत्रजादिरेकादशविधः। क्षेत्रजादीन् सुतानेता नेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति मानवात्। तत्र च येषु दम्पत्योरन्यतरावयवसम्बन्धस्तेषां न्यायादेव प्रतिनिधित्वं। वचनन्तु नियमार्थं येषु पुनरवयवसम्बन्धाभावस्तेषां वाचनिकम्प्रतिनिधित्वं यथा क्षेत्रजपौत्रिकेयपुत्रिकाकानीनपौनर्भवसहोढजगूढजानां कश्चिन्मातृमात्र सम्बन्धात् कश्चिच्च विकलोभयसम्बन्धादिकलावयवत्वेन मुख्यप्रतिनिधित्वं। दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां वाचनिकं प्रतिनिधित्वमिति। प्रतिनिधि शब्दश्चोभयत्रापि भूम्ना स्वीकृतपदधातीतिवत्। यत्तु मेधातिथिना नह्येवम्प्रति निधिना भवतीति प्रारब्धस्य कर्मणोऽङ्गापचारे प्रतिनिधिः। न च पुत्रः कर्माङ्गमपत्योत्पादनकर्मणोऽगुणकर्मत्वात् तेन सत्येव क्षेत्रजादीनाम्पुत्रशब्दे प्रतिनिधित्व वचनमौरसप्रशंसार्थं उपकारापचयाभिप्रायत्वात्प्रतिनिधिव्यवहारस्य यथौरसो भूयांसमुपकारं कर्त्तुं शक्नोति न तथेतर इत्युक्तम् तच्चिन्त्यं दत्तकादीनां प्रति निधित्वाभावे साध्ये पुत्रोत्पादनकर्मणोऽनङ्गत्वस्य हेतोरपक्षधर्मत्वात्। तेषां सिद्धत्वेनोत्पादनायोग्यत्वात्। अथ पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गत्वं सत्यं अनङ्गत्वं किन्तूत्पादनविधावेव नतु विध्यन्तरे। एष वा अनृणो यः पुत्रीत्यादिवाक्येषु पुत्रेणानृण्यं भावयेदिति विधिपर्य्यवसानेन पुत्रस्यानृण्यकरणतयाङ्गतासिद्धेः। उक्तञ्च साक्षादेव मनुना पुत्रस्य करणत्वं पुत्रेण लोकान् जयतीत्यादिना यद्येवन्तर्हि पौत्रप्रपौत्रयोरपि आनन्त्यस्वर्गपिष्टपप्राप्त्यर्थं पुत्रप्रतिनिधिः स्यात् आस्तान्नाम किन्नः छिन्नम् ॥ नचोभयैकवाक्यत्वेनानिश्चितसम्भवः। ऋतुगमन

पुत्त्रयोः करणयोः पुत्त्रानृणयोर्भाव्ययोश्चैकविधावनन्वयात्। अन्वये च विरुद्धत्रिकद्वयापत्तेः तस्मादानृण्यभाव्यिकायांभावनायाम्पुत्त्रस्य करणतया तदपचारे दत्तकादीनाम्प्रतिनिधित्वमविरुद्धं॥ सोमापचारे पूतिकानामिव एतदेव स्पष्टीकृतं मनुना। क्रियालोपान्मनीषिण इति क्रिया पिण्डोदकादिक्रिया औरसाभावे प्रतिनिध्यकरणे तल्लोपापत्तेः। तथाऽत्रिणापि। पिण्डोदकक्रियाहेतोरिति सर्व्वमनवद्यं। यदपि न स्वामित्वस्य भार्य्यायाः पुत्त्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्म्मणः शब्दस्य च प्रतिनिधिरिति सत्याषाढवचनेन पुत्त्रप्रतिनिधिनिराकरणं तत्तन्तवे ज्योतिष्मतीन्तामाशिषमाशास्त इत्यादावपुत्त्रस्य पुत्त्रप्रतिनिधिं कृत्वाशीराशंसननिवृत्यर्थं। अतएव श्रुतिः। यस्य पुत्त्रोऽजातः स्यात्तन्तवे ज्योतिष्मतीमिति ब्रूयादिति। तथा पिता पुत्त्रीये सामनि अमुकस्य पिता यजत इत्यादावपुत्त्रस्य पुत्त्रप्रतिनिधिं कृत्वा तत्प्रवचननिराकरणार्थन्न पुनः सर्व्वथैव पुत्त्रप्रतिनिधिनिराकरणार्थं पुत्त्रप्रतिनिधिः कर्त्तव्यः पुत्त्रप्रतिनिधीनाहुरित्यादिस्मृतिविरोधात्। अथेदं चिन्त्यते। योयम्प्रतिनिधिर्व्विधीयते स किम्पुत्त्रोत्पादनविधावुत पिण्डोकादिविधाविति उभयथाश्रवणात्। यथा। अपुत्त्रेणैव कर्त्तव्य इत्यनेन पुत्त्रोत्पादनविधौ पिण्डोदकक्रियाहेतोरित्यनेन च पिण्डोदकादिविधाविति। तत्र नाद्यः॥ पुत्त्रोत्पादनविधौ पुत्त्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्ययोग्यत्वात्। न द्वितीयः विरोधात्। अपुत्त्रम्प्रति पुत्त्रप्रतिनिधिः श्रूयते न तत्कृता पिण्डोदकक्रिया पुत्त्रकर्त्तृका च पिण्डोदकादिक्रिया न तम्प्रति प्रतिनिधिविधिरिति। किञ्च। पिण्डोदकादिविधिः पुत्त्रकर्त्तृको नच कर्त्तुःप्रनिनिधिः॥ अत्रापि क्रियाकर्त्तृत्वांशे प्रतिनिधिर्न्न फलभोगांशे यथा सत्रे सप्तदशानामन्यतमस्य मृतस्य क्रियाकर्त्तृत्वांशे प्रतिनिधिस्तथात्रापीति वाच्यम्। तदपि न वैषम्यात्। सत्रे ह्यारब्धक्रियस्य प्रतिनिधिः प्रकृते त्वत्यन्ताऽसतः क्रियारम्भस्यैवासम्भवात्कथम्प्रतिनिधिसम्भवः। न च प्रतिनिधिना क्रियारम्भोन्यायविरुद्धः। अथाऽपुत्त्रस्य जीवच्छ्राद्धे स्वकर्त्तृक एव पिण्डादिविधिरिति तत्रैव प्रतिनिधिरिति वाच्यं तदपि न। पुत्त्रप्रतिनिधिसम्भवे जीवच्छ्राद्धविधेरेवा

प्रवृत्तेः। किञ्च। जीवच्छ्राद्धस्य स्वकर्तृकत्वेन स्वस्यैव प्रतिनिधिः स्यान्न पुत्त्रस्य पुत्त्रकर्तृत्वाभावात्। तस्मान्नोक्तविधिद्वयेपि पुत्त्रप्रतिनिधिसम्भवः। किञ्च पिण्डोदकक्रियाहेतोरिति हेतुवचनमप्ययुक्तमेव। अपत्यधर्म्मत्वात्। न ह्यपुत्त्रस्य पिण्डोदकक्रियाप्राप्तिरस्तीत्युक्तमेवेति। अत्रोच्यते। नापुत्त्रस्य लोकोस्तीत्याद्यर्थवादानुगृहीते पुत्त्रेण लोकान् जयतीत्यादिविधौ पुत्त्रापचारे क्षेत्रजाद्येकादशविधः प्रतिनिधिर्विधीयते। तत्र च लोकपुत्त्रयोः साध्यसाधनभावनिर्व्वाहकान्तरव्यापारभूतक्रियापेक्षायां पिण्डोदकक्रियाहेतोरित्युच्यते यदेति बन्ध्याष्टमेऽधिवेत्तव्येत्यादिवदत्रावधिप्रतीक्षाभावम्बोधयति। पिण्डः श्राद्धं उदकमञ्जलिदानादिक्रिया और्द्ध्वदैहिकन्दाहादि अत एव हेतुः पुत्त्रीकरणे निमित्तं हेतुरित्येकत्वनिर्द्देशान्मिलितानामेषां निमित्तत्वं न प्रत्येकमिति गमयति तेन चैकैकार्थन्न पृथक्ऽपुत्त्रीकरणं। किन्तु सर्व्वार्थमेकमेव पुत्त्रीकरणमित्यर्थः। पुत्त्राभावे पिण्डादिलोपप्रसङ्गात्। अत एव मनुः। पुत्त्रप्रतिनिधीनाह क्रियालोपान्मनीषिण इति क्रियालोपादिति व्यतिरेके हेतुः। पुत्त्रप्रतिनिध्यभावे क्रियालोपादित्यर्थः॥ यद्वा अलोपादिति पदच्छेदः। अलोपादिति ल्यब्लोपे पञ्चमी अलोपार्थमित्यर्थः। यद्यपि पुत्त्राभावे तु पत्नीस्यादित्यादिना पुत्त्राभावे पत्न्यादीनामपि क्रियाधिकारः श्रूयते। तथापि नापुत्त्रस्य लोकोऽस्तीत्यादिश्रवणात्। पुत्त्रकृतक्रियाजन्या लोकाः। न स्त्र्यादिकृतक्रियया जन्यन्त इत्यवश्यं वाच्यम्। अन्यथा पुत्त्रपत्न्यादीनां तुल्यफलकक्रियाधिकारे तुल्यतया विकल्पापत्त्या अभावविधानानुपपत्तेः। तस्मात्पुत्त्रकृतक्रियाजन्यलोकविशेषसिद्धौ पुत्त्रप्रतिनिधिरावश्यक इति। उक्तञ्च मेधातिथिना। तत्र च यदौरसस्य प्रथमकल्पिकत्ववचनं तन्न व्यवहारोपयोगि किन्तूपकारातिशयाय। यथौरसो भूयांसं प्रकृत्युपकारङ्कर्त्तुं न तथेतर इति। उपकारापचयाभिप्रायश्च प्रतिनिधिव्यवहार इति। यत्तु तेनैव क्रियालोपादित्यत्र क्रियत इति क्रिया अपत्यमुत्पादयितव्यमिति विधिस्तस्य लोपो माभूदिति नित्योह्ययम्विधिः स यथा कथञ्चिद्गृहस्थेन सम्पाद्यस्तत्र मुख्यः कल्प औरसस्तदसम्पत्तावेते कल्प्या

आश्रयितव्या इति व्याख्यातम्॥ तच्चिन्त्यं। किम्पुत्रोत्पादनविधेर्दत्तकादिविधिः प्रतिनिधिरित्युच्यते। आहोस्विदौरसस्य दत्तकादिरिति। नाद्यः। न देवताग्निशब्दक्रियमित्यस्मिन्नधिकरणे क्रियायाः प्रतिनिधिनिराकरणात्॥ न द्वितीयः। न ह्येषाम्प्रतिनिधिता सम्भवतीत्यादिपूर्व्वग्रन्थविरोधात्। तत्र पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्यसम्भवाभिधानात् तस्मान्न क्रियाशब्देन पुत्रोत्पादन विधिः। किन्तु। पिण्डोदकक्रियैव वाच्या पिण्डोदकक्रियाहेतोरित्यत्रिवाक्यैकवाक्यत्वादित्यलं प्रयत्नेन इति पञ्चम्यास्तस्मिन्यस्मात्तस्मादिति सामानाधिकरण्यात्। ततश्च येन केनापि प्रयत्नेन पुत्रप्रतिनिधिः कार्य्य इत्यर्थः॥ तत्र च प्रयत्नसामान्यश्रुतावप्येकादश पुत्रश्रवणादेकादशैव प्रयत्ना अभ्यनुज्ञायन्ते। तत्रापि कलौ। अनेकधाः कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यास्तेऽधुना कर्त्तुं शक्तिहीनतया नरैरिति वृहस्पतिस्मरणात्॥ दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति च शौनकेन पुत्रान्तरनिषेधाद्दत्तौरसावेवाभ्यनुज्ञायेते। दत्तपदं कृत्रिमस्याप्युपलक्षणं॥ औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुत इति कलिधर्म्मप्रस्तावे पराशरस्मरणात्॥ नचैवं क्षेत्रजोपि पुत्रः कलौ स्यादिति वाच्यं। तत्र नियोगनिषेधेनैव तन्निषेधात्। अस्तु तर्हि विहितप्रतिषिद्धत्वात् विकल्प इति चेन्न दोषाष्टकापत्तेः। कथन्तर्ह्यत्र क्षेत्रजग्रहणमिति चेत्। औरसविशेषणत्वेनेति ब्रूमः। तथा च मनुः। स्वक्षेत्रे संस्कृतायान्तु स्वयमुत्पादितस्तु यः। तमौरसम्विजानीयात्पुत्रं प्रथमकल्पितमिति। तयोर्म्मध्ये दत्तकविधिरभिधीयते। स च कः कीदृशः कथञ्च ग्राह्य इति चितयन्निरूपणीयं॥ तत्र क इत्यत्राह शौनकः॥ ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेदिति सपिण्डेषु सप्तमपुरुषावधिकेषु सपिण्डेष्विति सामान्यश्रवणात्तच्च समानासमानगोत्रेष्विति गम्यते तत्र समानगोत्रतायां। स्वगोत्रेषु कृता येस्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते। इतिवृद्धगौतमीयवचनं प्रमाणं। गोत्रतां सन्ततिं। दत्ताद्या अपि तनया निजगोत्रेण

संस्कृताः। आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवा इति कालिकापुराणात्। सन्ततिर्गोत्रजननकुलान्यभिजनान्वयाविति त्रिकाण्डीयस्मरणाच्च नतु गोत्रतापदेन गोत्रसम्बन्धो विधीयते स्वगोत्रेष्वेव पुत्रीकरणेन तस्य साहजिकतया विधानायोगात्॥ न सापिण्ड्यं विधीयत इत्यसपिण्डस्य पुत्रीकरणे सापिण्ड्यञ्च प्रतिग्रहीतुः पाञ्चपौरुषं साप्तपौरुषञ्च निषिध्यते। असमानगोत्रस्य पुत्रीकरणे गोत्ररिक्थे जनयितुर्न भजेत् कृत्रिमः सुत इति मानवं॥ दत्तक्रीतादिपुत्राणाम्बीजवप्तुः सपिण्डता। पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य चेति बृहन्मानवं वचः प्रमाणं॥ सोऽयं मुख्यः कल्पस्तदसम्भवे ऽनुकल्पमाह। तदभावे ऽसपिण्डेष्विति॥ तेषां सपिण्डानामभावेऽसपिण्डोपि पुत्रीकार्य्यः॥ असपिण्डाः सप्तमपुरुषवहिर्भूताः। असम्बन्धिनश्च। तेपि द्विविधाः। समानगोत्रा असमानगोत्राश्चेति तत्रापि पूर्व्वोदाहृतमेव वचनम्प्रमाणम्। तदयन्निर्गलितोऽर्थः॥ समानगोत्रः सपिण्डो मुख्यस्तदभावेऽसमानगोत्रः सपिण्डः। यद्यप्यसमानगोत्रः सपिण्डः समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ एकैकविशेषणराहित्यादुभयोस्तथापि गोत्रप्रवर्त्तकपुरुषाऽसापिण्ड्यप्रवर्त्तकपुरुषस्य सन्निहितत्वेनाभ्यर्हितत्वं तेन चासमानगोत्रोपि सपिण्डएव ग्राह्यः। मातामहकुलीनः सर्व्वथासपिण्डाभावे ऽसपिण्डस्तत्रापि सोदकः आचतुर्दशात्। समानगोत्रः प्रत्यासन्नस्तस्याभावे असमानोदकः सगोत्रः एकविंशात्। तस्याप्यभावे असमानगोत्रोऽसपिण्डश्चेति। तदाह शाकलः॥ सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजमिति। सगोत्र इत्यनेन सोदकसगोत्रौ गृह्येते। अत्र च पूर्व्वपूर्व्वस्य प्रत्यासत्त्यतिशयेन निर्देश इति। तदेवाह वशिष्ठोपि। अदूरबान्धवम्बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति। अस्यार्थः अदूरस्थासौबान्धवश्चेत्यदूरबान्धवः सन्निहितः सपिण्ड इत्यर्थः। सान्निध्यञ्च द्विधा सगोत्रतया स्वल्पपुरुषान्तरेण च भवति तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरेपि सगोत्रः सपिण्डः तदभावे असमानगोत्रः सपिण्ड

स्तस्याप्यभावे बन्धुसन्निकृष्टः सपिण्डः । स्वस्यास पिण्डः सोदक इत्यर्थः पर्य्यव स्यति॥ तत्रापि सन्निकर्षो द्विविधः सगोत्रतया स्वल्पपुरुषान्तरेण च स्वस्यास पिण्डोपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डसपिण्डः सोदक इतियावत् सपिण्डसोद काद्यभावे समानगोत्र एकविंशाद्याद्यः। तदभावेऽसमान गोत्रोऽसपिण्डोऽपि ग्राह्यः। तदभावे ऽसपिण्डोपीति शौनकीयात् । सन्दिग्धे चोत्पन्ने दूरे बान्धवं शूद्रमिव स्थापयेदिति वशिष्ठलिङ्गाच्च। दूरे बान्धवा यस्याऽ सौ दूरबान्धवः। गोत्रसापिण्ड्याभ्यामसन्निहितमित्यर्थः। सन्देहोऽत्र कुलशीलादिविषयः। सचा सपिण्डे ऽसगोत्रे च भवतीति सोप्यनुज्ञायते । अन्यत्र तु न कारयेदिति । यद्यपि सपिण्डासपिण्डेभ्योऽन्यो न सम्भवति तथापि सर्व्वेषामपि वर्णानाञ्जाति ष्वेव नचान्यत इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादस मानजातीयाः सपिण्डाश्चासपिण्डाश्च व्यावर्त्यन्ते अप्रतिषिद्धमनुमतम्भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसम्भवात् ।

अतएव वृद्धगौतमः॥ यदिस्यादन्यजातीयो गृहीतो वा सुतः क्वचित् । अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तदित्यसमानजातीयस्यांशभाक्त्वं निषे धति ॥ तस्मादसमानजातीयेन पुत्त्रोकार्य्य इति सिद्धम्॥

॥ अतएव मनुः॥ सदृशम्प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतइ ति। सदृशं सजातीयम्। सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति योगीश्वरस्मरणात् । यत्तु मनुनैव। क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुत स्तस्य सदृशोऽसदृशोऽपिवेत्युक्तम्। तत्र गुणैरसदृशो वेति व्याख्येयम् न जात्येति। यत्तु। सदृशं न जातितः किन्तर्हि कुलानुरूपैर्गुणैस्तेन क्षत्त्रियादिरपि ब्राह्मणस्य पुत्त्रो युज्यत इति मेधातिथिना व्याख्यातम्। यच्च शूद्रोऽपि किल पुत्त्रो भव तीत्यभिप्राय इति कल्पतरुव्याख्यानम् । तदुभयमपि सजातीयेष्वयम्प्रोक्तस्तन येषु मया विधिरित्युदाहृतयोगीश्वरवचनविरोधात् जातिष्वेव न चान्यत इति शौनकवचनविरोधाच्चोपेक्ष्यम् । यत्तु मनुना। स्वयन्दत्तस्य शौद्रस्य षड

दायादबान्धवा इत्यत्र शौद्रस्य पुत्त्रप्रतिनिधित्वेन परिगणनं कृतं । तच्छूद्रेण दास्यामुत्पादितस्य अनूढोत्पन्नस्य मुख्यपुत्त्रलाभावात्पुत्त्रप्रतिनिधित्वमभिप्रेत्येति व्याख्येयम् ।

जातोपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् । मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम् । अभ्रातृको हरेत्सर्व्वं दुहितॄणां सुतादृते इति योगीश्वरणात् तस्मात्सहृदन्दातुः प्रतिग्रहीतुश्च सवर्णमित्यपरार्कव्याख्यैवात्र साधीयसी ॥

॥ याज्ञवल्क्योपि ॥ सजातीयेष्वयम्प्रोक्तस्तनयेषु मया विधिरिति सन्निहितसगोत्रसपिण्डेषु च भ्रातृपुत्त्र एव पुत्त्रीकार्य्यइति । अभ्युपगतश्चैतद्विज्ञानेश्वराचार्य्यैरपि । भ्रातृपुत्त्र एव पुत्त्रीकार्य्यइति अत्र सोदरभ्रातृपुत्त्र एव पुत्त्रीकार्य्यः ॥

॥ इत्याह मनुः ॥ भ्रातॄणामेकजातानामेकश्चेत्पुत्त्रवान् भवेत् । सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीदिति । अत्र भ्रातॄणाम्प्रतिग्रहीतृत्वप्रतिपादनाद्भ्रातृत्वलाभावोऽवगम्यते । एकजातानामित्यनेनैकेन पित्रा एकस्यां मातरि जातानामेव ग्रहीतृत्वं न भिन्नोदराणाभिन्नपितृकाणां वेति गम्यते । भ्रातॄणामिति पुंस्त्वनिर्द्देशात्पदद्वयोपादानसामर्थ्याच्च सोदरणाभ्रातृभगिनीनामपि परस्परपुत्त्रग्रहीतृत्वाभावोऽवगम्यते ॥

॥ तदाह वृद्धगौतमः ॥ ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति भागिनेयपदं भ्रातृपुत्त्रस्याप्युपलक्षणम् । तेन भगिन्याभ्रातृपुत्त्रो न ग्राह्य इत्यर्थः सिद्ध्यति । भ्रातॄणामेव ग्रहीतृत्वप्रतिपादनात् । यद्यपि भ्रातृपुत्त्रो स्वसृदुहितृभ्यामित्यनेनैकशेषोऽवगम्यते ततश्च भ्रातृभगिनीपुत्त्रयोः भ्रातृभगिनीभ्यां परस्परं पुत्त्रीकरणमवगम्यते । तथाप्येकजातानामिति भ्रातृविशेषणेन एकं जातं जातिर्येषां ते एकजाताः ।जातिर्ज्जातन्तु सामान्यमिति कोषात् । तेषां समानजातीयत्वप्रतिपादनात् । भ्रातॄणां पुंसां भ्रातृपुत्त्रस्य भगिनीनाञ्च स्त्रीणाम्भगिनीपुत्त्रस्य पुत्त्रीकरणं सिद्ध्यति । न भ्रातृपुत्त्रस्य भगिन्या भगिनीपुत्त्रस्य भ्रात्रा वा पुत्त्रीकरणं सम्भवति स्त्रीपुंस्त्वजातिभेदात् । ननु सकृदुच्चरितस्य एकजाता

नामित्येकस्य पदस्य सोदरत्वं समानजातीयत्वञ्चेत्यर्थद्वयं न सम्भवति । सकृदुच्चारितः शब्दः सकृदेवार्थं गमयतीति न्यायविरोधादिति चेन्न असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृज इत्यत्र संसृष्टपदस्य सोदरपरत्वेन संसृष्टपरत्वेन च विज्ञानेश्वराचार्य्यैर्व्याख्यातत्वादिहापि तथैवेति न दोष इत्यलं। बहुवचनं एक द्वित्वयोरप्युपलक्षणं। बहुषु द्वयोः सम्भवात्। यदि हि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति द्विपितृकत्वसम्भवाच्च। एक एकोपि चेदित्यनेन द्वयोर्बहूनाम्वा पुत्त्रवत्त्वे सुतरां सुकरं पुत्त्रग्रहणमन्येषामपुत्त्राणाङ्गमयति। नैकोयैकपुत्त्रग्रहणं व्यावर्त्तयति एकपदोपादानसामर्थ्यात्तेनेत्येकत्वनिर्द्देशाच्च। पुत्त्रः पुत्त्रा वा विद्यन्ते यस्येति मतुप्। तेन चैकस्यापि पुत्त्रस्य दानाभ्यनुज्ञाने न त्वेवैकम्पुत्त्रन्दद्यादिति निषेधस्यात्रानवकाशः। स हि सन्तानाय पूर्व्वेषामिति हेतुवचनप्रतिपादितपित्रादिपूर्व्वसन्तानस्य पितृद्वयसाधारणेनापि पुत्त्रेण निर्व्वाहादुक्तनिषेधस्य भ्रात्रतिरिक्तविषयता सिद्धेः। किञ्च दानस्य स्वस्वत्वनिवृत्तिपूर्व्वक परस्वत्वापादनरूपत्वात् तस्य चानेन निषेधात्। प्रकृते चैकस्योभयसाधारणीकरणेन स्वत्वनिवृत्त्यभावात् कन्यादान इव दानपदार्थस्य गौणत्वात्। पुत्त्रपदस्यौरसे मुख्यत्वादौरसत्वमेव पुत्त्राणां सिद्ध्यति। तेन च भ्रातृकृतपुत्त्रप्रतिनिधीनाम्परिग्रहणाभावोऽवगम्यते। भवेदित्यनेन पुत्त्रवत्तायाः सत्ताप्रतिपादनाद्भूतपुत्त्रत्वं भविष्यत्पुत्त्रत्वञ्च व्यावर्त्तयति। तेन चातीतेन भ्रातृपुत्त्रेणान्यस्य भ्रातुर्न्न पिता पुत्त्रस्य जातस्य पश्येच्चेज्जीवतो मुखमित्यादि फलसम्बन्धः। न चानागतपुत्त्रप्रतीक्षायाम्पुत्त्रान्तरापरिग्रह इति ॥ तच्छब्देना पुत्त्राणामेव भ्रातॄणाम्परामर्शात् जनकस्य स्वपुत्त्रसम्बन्धाभावव्यावर्त्तनाय सर्व्वे इति ॥ त इत्यत्र स च तौ च ते च इत्येकशेषादेकस्य द्वयोर्बहूनां वा पुत्त्रेच्छया तत्पुत्त्रीकरणं भवति। तेनेति येन जनकस्य पुत्त्रवत्त्वं तेनैव सर्व्वेषामपीति। पुत्त्रेणेत्येकत्वनिर्द्देशादेकस्याप्यनेकपुत्त्रत्वाभिधानेन। नत्वेवैकम्पुत्त्रन्दद्यात्प्रतिगृह्णीयाद्वेत्येतन्निषेधस्यात्रानवकाश इत्युक्तमेव॥ तथाच कालिकापुराणे॥ वेतालभैरवयोः शङ्करात्मजयोरेकेन पुत्त्रेणोभयोः पुत्त्रवत्त्वं लिङ्गं दृश्यते॥

ऋषय ऊचुः ॥ अपुत्त्रस्य गतिर्न्नास्ति श्रूयते लोकवेदयोः । वेतालभैरवौ यातौ पुरा वै तपसे गिरिं । पूर्व्वं त्यक्तदारौ तौ तयोः पुत्त्रा नच श्रुताः । तेषान्तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमं ॥

॥ मार्कण्डेय उवाच ॥ अपुत्त्रस्य गतिर्न्नास्ति प्रेत्य चेह च सत्तमाः। स्वपुत्त्रै र्भ्रातृपुत्त्रैश्च पुत्त्रवन्तो हि स्वर्गताः ॥ सम्यक् सिद्धिमवाप्येह यदा वेतालभैरवौ । हरस्य मन्दिरं यातौ कैलासम्प्रति हर्षितौ ॥ तदा हरस्य वचनान्नन्दी तौ रहसि द्विजाः । प्राहेदम्वचनं तथ्यं सान्त्वयन्निव बोधकृत् ॥

॥ नन्द्युवाच ॥ अपुत्त्रौ पुत्त्रजनने भवन्तौ शङ्करात्मजौ । यतेतां जातपुत्त्रस्य सर्व्वत्र सुलभा गतिः ।

॥ मार्कण्डेय उवाच ॥ तस्येदम्वचनं श्रुत्वा नन्दिनः प्रीतमानसौ । एकमेव करिष्यावो नन्दिनञ्चेत्यभाषताम् । ततः कदाचिदुर्व्वश्यां भैरवो मैथुनङ्गतः । तस्यां स जनयामास सुवेशन्नाम पुत्त्रकम् । तमेव चक्रे तनयम्वेतालोपि स्वकं सुतम् । ततस्तौ तेन पुत्त्रेण स्वर्ग्याङ्गतिमवापतुरिति ॥ नन्विदमेकस्यानेकपुत्त्रत्वं किंयुगपदुत्पत्स्यतेऽथवा क्रमेण । नाद्यः युगपत्प्रतिग्रहीतुरिति विभ्रमा वात् । नापरः पूर्व्वसंस्कारावरुद्धे तत्सजातीयसंस्कारान्तरानुत्पत्तेरिति चेन्न । सप्तदशावराश्चतुर्व्विंशतिपरमाः सत्रमासीरन्निति वत्तत्सर्व्वशब्दयोर्द्वन्द्वे कशेषेण प्रतिग्रहीतृभ्रातृसाहित्यस्यात्र विवक्षितत्वात् । तेन दानमपि सहि तेभ्य एव सिद्ध्यति । यथा तुलापुरुषे सहितानामेव ऋत्विजां सम्प्रदानत्वम्प्र तिग्रहीतृत्वञ्चेति । तदाहुः। इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणमित्यत्र ऋत्विग्भ्य इति बहुवचनान्मिलितानामेव सम्प्रदानत्वम् । तेन च सर्व्वेषामुपरि गुरुहस्तं कृत्वा तदधः क्रमेण ऋग्वेद्यादीनामृत्विजां हस्तानाधाय भूषणानि देयानीति वाचस्पतिमिश्राः । नच युगपदनेकपुत्त्रत्वानुपपत्तिरपि युगप त्प्रतिग्रहेण द्रौपदीभार्य्यात्ववदस्य विलक्षणस्यैवानेकपुत्त्रत्वस्य प्रसिद्ध्यामुष्याय णत्ववत्स्वीकारात् । पुत्त्रिण इत्यत्र पुत्त्र एषामस्तीति भवनार्थकेनास्तिना पुत्त्रभ वनप्रतिपादनादभावितस्य च भवनायोगात् प्रतिग्रहीतृव्यापार आक्षिप्यते ॥

तथाचात्रिः ॥ अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेति ।

वशिष्ठोऽपि ॥ पुत्रम्प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति ॥

शौनकोऽपि ॥ दातुः समक्षङ्गत्वा तु पुत्रं देहीति याचयेत्। याचयेदिति प्रयोजके णिच्। तेन याचनार्थंहृतब्राह्मणद्वारा याचयेदिति एतेनाकृत स्यव भ्रातृपुत्रस्य पितृव्यपुत्रत्वम्। अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजोभवेत्। स एव तस्य कुर्व्वीत श्राद्धपिण्डादकक्रियामिति वृहत्पराशरस्मरणात् इतिचोद्यं निरस्तम्। प्रतिग्रहीतृव्यापारम्बिना तत्पुत्रत्वानुपपत्तेः। नच गूढोत्पन्नदत्ता त्मनोः कर्त्तृव्यापाराभावः । गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृत इति । दत्तात्मा तु स्वयन्दत्त इति कर्त्तृव्यापाराश्रवणादिति वाच्यम्। तत्रापि फलस्य क्रियासामानाधिकरण्यान्यथानुपपत्त्या तत्कल्पनात्। तस्मात् भ्रातॄणामेकजा तानामित्यपुत्रस्य पितृव्यस्येति वचनं न यथाश्रुतमेवार्थवत्। त्रयोदशपुत्रापत्तेः नचेष्टापत्तिः। पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः । तेषां षड्बन्धु दायादाः षडदायादबान्धवा इति द्वादशसङ्ख्याविरोधात्। नन्वस्त्वेव सङ्ख्या विरोधः। औरसः पुत्त्रिकाबीजक्षेत्रजौ पुत्त्रिकासुतः। पौनर्भवश्च कानीनः सहोढो गूढसम्भवः । दत्तः क्रीतः स्वयन्दत्तः कृत्रिमश्चापविद्धकः । यत्र क्वचो त्पादितश्च स्वपुत्रा दशपञ्चचेति स्मृत्यन्तरस्मरणात्। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्व्वशः। सन्तानकारणन्तेषामौरसः पुत्त्रिकातथेति वृहस्पति स्मर णात्॥ क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति स्मरणात् । औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरेतु क्रमशो गोत्ररिक्थांशभागिन इति मनुस्मरणाच्चेति चेत्सत्यम्। केषाञ्चित्क्वचिदन्तर्भावात् क्वचिद्बहिर्भावाच्च तत्तत्सङ्ख्योपपत्तेर्न्नद्वाद शसङ्ख्याविरोधइति स्थितम्॥ किञ्चापुत्रदायाधिकारे पत्नीदुहितरश्चैव पित रौ भ्रातरस्तथा। तत्सुत इति पञ्चमस्थानस्थितिविरोधश्च॥ अयमभिसन्धिः। भ्रातृव्यस्याकृतस्यापि पुत्रत्वेऽपुत्रत्वादपुत्रधनाधिकारे पञ्चमस्थाने भ्रातृव्यपरि

गणनं विरुद्धमेवं पुत्त्रः पौत्त्रः प्रपौत्त्रस्य तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्व्वापि क्रियार्हा नृप जायते इत्यादिपिण्डाधिकारे ज्ञेयम्। नन्विदमप्रयोजकं यत्पिण्डऋक्थाभावादपुत्त्रत्वमिति। अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः। पौनर्भवस्य नैवैते पिण्डऋक्थांशभागिन इति विष्णुना कानीनादीनां पुत्त्रत्वेऽपि पिण्डऋक्थाभावदर्शनात्। तथा पिण्डऋक्थाभावे ऽप्यकृतस्यैव भ्रातृव्यस्यास्तु पुत्त्रत्वं काक्षतिरिति चेत् मैवम् पिण्डदोषहरश्चैषामित्यनेन पिण्डऋक्थभागित्वं हि पुत्त्रत्वस्य प्रयोजनमुक्तं तदभावे क्लीवादेरिव पुत्त्रत्वस्वरूपसत्तामात्रस्याप्रयोजकत्वात्। अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदेति विधिप्रत्ययश्रवणेनाकृतस्य पुत्त्रत्वायोगाच्च। नच भ्रातृव्येतरविषयोऽयंविधिरिति वाच्यम्। सङ्कोचे प्रमाणाभावात्प्रत्युत एकमेव करिष्याव इत्युपक्रम्य तमेव चक्रे तनयम्बेतालोपि स्वकं सुतमिति वैतालीयभैरवपुत्त्रपुत्त्रीकरणलिङ्गविरोधाच्च॥ किञ्च यत्र दशानां सोदराणां मध्ये पञ्च प्रत्येकन्दश पुत्त्राः पञ्च चात्यन्तमपुत्त्रास्तत्र पञ्चानामपुत्त्राणाम्प्रत्येकं पञ्चाशत्पुत्त्रत्वापत्तिः पञ्चाशताञ्च पुत्त्राणाम्प्रत्येकन्दशपितृकतापत्तिरित्याद्यनेकोपप्लवः न चेष्टापत्तिः पुत्त्रप्रतिनिधिः कार्य्य इत्युपादेयगतैकत्वविवक्षणात्। एकश्चेत्पुत्त्रवान्भवेत्। सर्व्वे ते तेन पुत्त्रेणेत्यत्र पुत्त्रपुत्त्रवतोरुभयोरपि प्रत्येकं श्रुतैकत्वविरोधाच्च॥ नच स्वपुत्त्रैर्भ्रातृपुत्त्रैश्च पुत्त्रवन्तो हि स्वर्गता इत्यत्र भ्रातृपुत्त्राणां बहुत्वश्रवणादित्यलम्बहुना। बहवोपि भ्रातृपुत्त्रा अकृता एवैकस्य पुत्त्रा भवेयुरिति वाच्यम्। तस्य लौकिकसिद्धबहुत्वानुवादकार्थवादगतत्वेनाविवक्षितत्वात्॥ अस्मत्पक्षे तु एकेनैव अकृतनित्यविधिसिद्धावनेकोपादानस्य वैयर्थ्यादशास्त्रीयत्वाच्च॥ तस्मात्सन्निहितसगोत्रसपिण्डेषु भ्रातृपुत्त्र एव पुत्त्रीकार्य्य इति स्थितम्। ततश्च कृतत्वेन प्रथमं धनपिण्डभागित्वमकृतत्वेन च स्वस्वस्थान इति॥ विष्णुवचनन्तु पूर्व्वपूर्व्वपरिगणितपुत्त्रसद्भावविषयमिति न कोपि विरोधः। नन्वेवं सर्व्वासामेकपत्नीनामेका चेत्पुत्त्रिणी भवेत्। सर्व्वास्तास्तेन पुत्त्रेण पुत्त्रिण्यो मनुरब्रवीदित्यत्राप्यकृतस्य पुत्त्रत्वं न स्यात्। न चेष्टापत्तिः आचारविरोधात्। पितृपत्न्यः सर्व्वा मातर इति पितृ

पत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधाच्चेति चेत्। मैवं सपत्नीपुत्रस्य साचा द्भर्त्रवयवारब्धतया ऽक्रतस्यापि पुत्रत्वसम्भवात्। वचनन्तु नियमार्थमित्युक्त मेव। भ्रातृव्ये तु दम्पत्योरन्यतरस्याप्यवयवसम्बन्धाभावात्। नाकृतस्य पुत्रत्व मिति॥

यत्तु वृहस्पतिना॥ यद्येकजाता बहवो भ्रातरस्तु सहोदराः। एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणः स्मृताः॥ बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः। एका चेत्पुत्त्रिणी तासां सर्व्वासां पिण्डदस्तु सः। इति भ्रातृव्यधर्म्मातिदेशः॥ सापत्न्येऽभिहितः सोपि प्रतिनिधित्वाभिप्रायेण न पुत्रीकरणाभिप्रायेण भर्त्त्र वयवारब्धत्वेन पुत्त्रत्वस्य सिद्धत्वात्। विकल्पावयवारब्धत्वेन प्रतिनिधित्वेपि सिद्धे वचनन्नियमार्थमित्युक्तमेव। तदेतत् स्पष्टीकृतन्देवस्वामिना। उभय त्रापि नान्यः प्रतिनिधिः कार्य्य इत्यनेन ग्रन्थेन विवृतञ्चैतच्चन्द्रिकायाम्॥ उभयत्रापि यद्येकजाता इत्येत्र वचनद्वयेपि भ्रातृसुते सपत्नीसु ते च पुत्त्रप्रति निधितया कथञ्चित्सम्भवत्यन्यो न प्रतिनिधिः कार्य्य इति। विज्ञानेश्वरोपि मानववचो व्याचष्टे। भ्रातृपुत्त्रस्य पुत्त्रीकरणसम्भवे ऽन्येषाम्पुत्त्रीकरणनिषेधार्थं न पुनः पुत्त्रत्वप्रतिपादनाय तत्सुतो गोत्रजो बन्धुरित्यनेन विरोधादिति॥ भ्रातृव्याभावेऽन्योप्युक्तरीत्या प्रत्यासन्नः॥

तथाच शौनकः॥ क्षत्त्रियाणां स्वजातौ वै गुरुगोत्रऽसमेऽपि वा। वैश्याना वैश्यजातेषु शूद्राणां शूद्रजातिषु॥ सर्व्वेषाञ्चैव वर्णानाञ्जातिष्वेव च नान्यतः। दौहित्त्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति॥ स्वजातौ क्षत्त्रियजातौ जातिसामान्योपादानेऽपि प्रत्या सत्तिः पूर्व्ववद्त्रापि नियामिकाः। अदूरबान्धवमित्यादिवशिष्ठस्मरणात्। सपिण्डाभावे गुरुगोत्रसमेपि वा क्षत्त्रियाणं प्रातिस्विकगोत्राभावाद्गुरुनिर्द्देशः। अतएव व्यवधानात्सपिण्डाभावे सगोत्रविधानं तत्रापि स्वजातावित्येव सर्व्वेषा ञ्चैव वर्णानां जातिष्वेव च नान्यत इति वाक्यशेषात्॥ तेन च भिन्नजातीय सपि ण्डसगोत्रव्यावृत्तिः। वैश्यजातेषु वैश्यजातिष्वित्यर्थः। जातिर्ज्ञातन्तु सामान्य

मिति त्रिकाण्डीयस्मरणात्। अत्रापि सामान्योपादानेऽपि प्रत्यासत्तिः पूर्व्ववन्नि यामिका । गुरुगोत्रसमेऽपि वेत्यत्रापि प्रवर्त्तते। पौरोहित्याद्राजन्यविशामिति स्मरणात् ॥ स्वर्गे त्रिषु कृता ये स्युरित्यस्य त्रैवर्णिकसाधारण्याच्च। सपिण्डाभावे गुरुगोत्रसम इत्यत्रापि तु अप्रत्यासत्तेर्न्नियामकत्वात् । शूद्रजातिष्विति । अत्रापि प्रत्यासत्तिः पूर्व्ववदेव । गुरुगोत्राश्रवणाच्च गुरुगोत्रसमेऽपि वेत्यस्यात्रा प्रवृत्तिः। तेन शूद्रजातिमात्र इति सिद्ध्यति ॥

तदाह ब्रह्मपुराणम् ॥ शूद्राणान्दासवृत्तीनां परपिण्डोपजीविनां। परा यत्तशरीराणां न कश्चित्पुत्त्र इत्यपि । तस्माद्दासस्य दास्याश्च जायते दास एव हीति । त्रैवर्णिकानां त्रैवर्णिकानुलोमजानाञ्चोत्कृष्टत्वात्प्रतिलोमजानाञ्चापकृष्ट त्वान्न कश्चित्पुत्त्रः कर्त्तुं शक्यते इति शूद्र एव पुत्त्रीकार्य्यो दासदास्युत्पन्नत्वादिति ननु क्षत्त्रियादिवाक्यत्रयं नारम्भणीयं न्यायसाम्येन पूर्व्ववाक्यादेव तदर्थ सिद्धेः। आरम्भे वापि सर्व्वेषाञ्चैव वर्णानामित्यनेन पौनरुक्त्याच्चेति चेत् मैवं क्षत्त्रि यादिपदैः क्षत्त्रियादिसमानधर्म्मकमूर्द्धावसिक्तादीनामपि प्राप्त्यर्थत्वात् ॥ ब्राह्म णेन क्षत्त्रियायामुत्पादितः क्षत्त्रिय एव भवति क्षत्त्रियेण वैश्यायां वैश्य एव वैश्येन शूद्रायां शूद्र एव भवतीति शङ्खस्मरणात् ॥ स्वजाताविति क्षत्त्रिया दिसमानधर्म्मत्वेऽपि मूर्द्धावसिक्तादीनां क्षत्त्रियादिपुत्त्रत्वाभावबोधनायेति ॥ तिसोवर्णानुपूर्व्व्येणेत्यानुपूर्व्यलिङ्गात् । नच सर्व्वेषामित्यनेन पौनरुक्त्यं तस्य वर्णानामनुलोमानाञ्च स्वजातिनियमानुवादेन प्रतिलोमानां तदभावबोधनार्थ त्वात् ॥ तदेवाह सर्व्वेषामिति वर्णपदोपादानसामर्थ्याद्वर्णानामेव स्वजातिनियमः स्यान्नानुलोमजानामिति तत्प्राप्त्यर्थं सर्व्वपदोपादानम्प्राप्तिश्च वर्णसमानधर्म्म त्वात् नच वर्णविशेषणत्वत् च कारानुपपत्तेः। ततश्च वर्णानामनुलोमजानाञ्च जातिष्वेवेति नियमो नान्यतोनान्येषु प्रतिलोमेष्वित्यर्थः। नन्विदं पूर्व्ववाक्यप्रा प्तप्रत्यासत्त्यपवादकतयैव कुतो नेष्यते । अदूरबान्धवमिति वशिष्ठवाक्यवि रोधादिति चेन्न तस्य ब्राह्मणवाक्यैकवाक्यतयोपसंहारादितिचेत्। मैवम् अपवाद लौकिकवैदिकप्रत्यासत्तिनियामकवृद्धव्यवहाररूपन्यायविरोधात् ।

प्रयोजनाभावादतिप्रसङ्गाद्नेनैव प्रत्यासत्तिसामान्यापवादे दौहित्रो भागिनेय श्चेति प्रत्यासत्तिविशेषापवादासङ्गतेश्च तस्मात् यथोक्तव्याख्यैव प्रयोजनवतीति प्रत्यासत्तिसामान्यात् प्राप्तयोर्दौहित्रभागिनेययोस्त्रैवर्णिकेष्वपवादमाह दौहि त्र इति। तुशब्दस्य चावधारणार्थतया शूद्रैरेवेति नियमात् त्रैवर्णिकव्या वृत्तिः तत्र हेतुमाह ब्राह्मणादित्रय इति क्वचिदपि शास्त्रे भागिनेयस्य त्रैव र्णिकसुतत्वादर्शनाच्छूद्रविषयत्वमेवेति समुदायार्थः भागिनेय इत्यविवक्षितं हेतौ व्यर्थविशेषणतापत्तेः। विवक्षायां भागासिद्धेश्च। दौहित्रभागिनेयौ शूद्र विषयौ शास्त्रान्तरे त्रैवर्णिकविषयत्वाभावात् यथा सुरापानादाविति प्रयोगान्ते नोभयोस्त्रैवर्णिकविषयत्वासिद्धिः। अथैतद्वाक्यद्वयं शब्दविधयैव स्वस्वविषये प्रमाणं नानुमानविधया तेन भागिनेयमात्रस्यैव त्रैवर्णिकविषयत्वाभवो न दौहित्रस्येति वाच्यं तदपि न वाक्यभेदापत्तेः। दौहित्रस्य त्रैवर्णिकेषु विकल्पा पत्तेश्च ॥ श्रदूरबान्धवत्वेन प्राप्तत्वाच्छूद्राणामेवेति नियमेन निषिद्धत्वात् यदा शूद्राणामेवेति नियमेन दौहित्रस्य त्रैवर्णिकेषु निषेधः सिद्ध्यति। त्रैवर्णि कानां भागिनेय एव न भवतीति नियमेन दौहित्रस्य प्राप्तिश्च सिद्ध्यतीति विकल्पः। किञ्च शब्दविधया प्रामाण्ये पूर्व्ववाक्ये किं नियमः परिसङ्ख्या वा स्यात्। कथं नियमः कथञ्च परिसङ्ख्या। दौहित्रभागिनेययोरेव शूद्राणामिति नियमः पक्षे दौहित्रादेः पक्षे च भ्रातृव्यादेः प्राप्तत्वात्। शूद्राणानेव दौहित्र भागिनेयाविति च परिसङ्ख्या दौहित्रादेश्चतुर्ष्वपि वर्णेषु युगपत्प्राप्तत्वात् ॥ तत्राद्ये भ्रातृव्यादिविधायकसामान्यशास्त्रस्य बाधः सर्व्वेषामेव वर्णानां जाति स्थेव नचान्यत इत्यत्र जातिपदस्य दौहित्रादि परतया सङ्कोचः॥ दौहित्रभागि नेययोरभावे पुत्रीकरणाभावप्रसङ्गश्चेति। परिसङ्ख्यापक्षे तु शूद्राणामेवेत्यने नैव त्रैवर्णिकेषु तन्निषेधप्रसिद्धौ ब्राह्मणादित्रये भास्ति इत्यादि पुनस्तन्निषेधक वाक्यवैयर्थ्यापत्तिरिति तस्मादनुमानविधयैव वाक्यद्वयव्याख्या साधीयसीति। किञ्च न्यायमूलिकाया अनुमानविधायाः श्रुतिमूलिकायाः शब्दविधाया गुरु त्वाच्च॥ श्रुतिकल्पने श्रुतिद्वयकल्पनाच्च न्यायमूलकत्वे च नास्तीति वर्त्तमानाप

देशो लिङ्गम्। यदा तु दौहित्रो भागिनेयो वा शूद्राणां विहितः सुत इति पाठ स्तदापि शूद्राणामेव शूद्राणामपीति वेत्यन्वयसंशयव्युदासाय नियमपरता मेव स्पष्टीकर्त्तुं ब्राह्मणादित्रय इत्यस्य प्रवृत्तेरेकवाक्यतैव नियमपरता चेयं। दौहित्रभागिनेयकर्म्मकपुत्त्रीकरणभावनायामनियमेन चतुर्णामपि वर्णानां कर्त्तृत्वेन प्राप्तौ शूद्रनियमेन शूद्राणामेवेत्यन्वयः सिद्ध्यति तथा च भागिनेय पदं दौहित्रस्याप्युपलक्षणमेव। अन्यथा दौहित्रभागिनेययोः शूद्रविषयत्वनिय मासिद्धेः। सिद्धौ वा दौहित्रस्य त्रैवर्णिकविषये विकल्पापत्तिरित्युक्तमेव। यद्येवं तर्हि भागिनेयस्य त्रैवर्णिकविषयत्वाभाव एव दौहित्रभागिनेययोः शूद्रविषय त्वेन साध्यतामिति चेन्न। शूद्रविषयत्वादित्यनेनैव सिद्धौ दौहित्रभागिने यपदोपादानवैयर्थ्यात्। अविवक्षायामुभयाविवक्षातो भागिनेयमात्राविव क्षाया लघुत्वात्। तस्माद्यथोक्तमेव साधीय इति॥

तदेतत् स्पष्टमाचष्ट शाकलः। सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपु त्त्रको द्विजो यस्मात्पुत्त्रत्वे परिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजं। दौहित्रं भागिनेयञ्चमातृस्वसृसुतन्त्विनेति। एतेन भागिनेयपदं दौहित्रमातृ ष्वस्रेययोरुपलक्षणमिति स्पष्टमेव सिद्धम्। युक्तञ्चैतत् विरुद्धसम्बन्धस्य त्रिष्वपि समानत्वादित्यलम्बङ्कना।

नान्यजातीयः पुत्त्रीकार्य्य इत्युक्तं तदतिक्रमे कथमित्यत आह शौनकः॥ यदिस्यादन्यजातीयो गृहीतोपि सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तदिति। अन्या गृहीत्रपेक्षया उत्कृष्टा अपकृष्टा वा जातिर्यस्यासौ गृहीतो विधिनापीत्यर्थः। अंशोधनस्य अंशपदसामर्थ्यात् कृत्स्नधनव्युदा सोऽर्थसिद्ध एव॥ असवर्णास्तु ग्रासाच्छादनभाजना इति कात्यायनस्मरणात्। पिण्डदोंऽशहरश्चैषामित्युपक्रम्य सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति योगीश्वरस्मरणाच।

इदानीं कीदृशः पुत्त्रीकार्य्य इत्यत आह शौनकः॥ नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं कदाचन। बहुपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नत इति। एक एव पुत्त्रो यस्येति एक

पुत्त्रस्तेन तत्पुत्त्रदानं न कार्य्यम्। नत्वेवैकम्पुत्त्रन्दद्यात्प्रतिगृह्णीयाद्वेति वशिष्ठस्म रणात्। अत्र स्वस्वत्वनिवृत्तिपूर्व्वकपरस्वत्वापादानस्य दानपदार्थत्वात् परस्व त्वापादनस्य च परप्रतिग्रहम्विनानुपपत्तेस्तमप्याक्षिपति। तेन प्रतिग्रह निषेधोप्यनेनैव सिद्ध्यति॥

अतएव वशिष्ठः॥ नत्वेवैकम्पुत्त्रन्दद्यात्प्रतिगृह्णीयाद्वेति। तत्र हेतुमाह। स हि सन्तानाय पूर्व्वेषामिति। सन्तानार्थत्वाभिधानेनैकस्य दाने सन्तानविच्छि त्तिप्रत्यवायो बोधितः। स च दातृप्रतिग्रहीत्रोरुभयोरप्युभयशेषत्वात्॥

यत्तु स्मृत्यन्तरम्॥ सुतस्य सुतदाराणां वशित्वमनुशासने। विक्रये चैव दाने च वशित्वं न सुते पितुरिति। यच्च योगीश्वरस्मरणम् देयन्दारसुतादृत इति तदेकपुत्त्रविषयम्। कदाचन आपदि॥

तथाच नारदः॥ निक्षेपः पुत्त्रदारञ्च सर्व्वस्वञ्चान्वये सति। आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यसाधारणन्धनमिति। इदमप्येकपुत्त्रविषयमेव वशिष्ठशौनकैकवाक्यत्वात्। तर्हि केन पुत्त्रो देय इत्यत आह। बहुपुत्त्रेणेति। बहवः पुत्त्रा यस्येति बहुपुत्त्रः नैकपुत्त्रेणेति निषेधात्। द्विपुत्त्रस्यैव दानप्राप्तौ यद्बहुपुत्त्रेणेत्युच्यते। तद्द्विपुत्त्रस्यापि तत्प्रतिषेधाय। एक पुत्त्रो ह्यपुत्त्रो मे मतः कौरवनन्दन। एकं चक्षुर्यथाऽचक्षुर्नाशे तस्यान्ध एवही त्यादि भीष्मम्प्रति शान्तनूक्तेः। बहुपुत्त्रेणेति पुंस्त्वश्रवणात् स्त्रियाः पुत्त्रदानप्रति षेधः। अत एव वशिष्ठः। न स्त्री पुत्त्रन्दद्यादिति नैरपेक्ष्यश्रवणाच्चेति भावः॥ भर्त्रनुज्ञाने तस्या अप्यधिकारः। तथाच वशिष्ठः। अन्यत्रानुज्ञानाद्भर्त्तुरिति॥ यत्तु दद्यान्माता पिता यम्वेति यच्च माता पिता वा दद्यातामिति मातृ पितृसमकक्षयाभिधानं तदपि भर्त्रनुज्ञानविषयमेव। नचैवं विधवाया आपद्यपि पुत्त्रदानं न स्यात् भर्त्रनुज्ञानासम्भवात् परिग्रहवदिति वाच्यम्। मानवीयलिङ्ग दर्शनेन तथाकल्पनात्। नैरपेक्ष्यैकत्वश्रवणाच्च। स्त्रीनिरपेक्षस्यैकस्यापि पुत्त्रस्य भर्तुर्दानाधिकारः। दद्यान्माता पिता यं वा माता पिता वा दद्यातामिति मातृनिरपेक्ष्यैकपितृनिर्द्देशाद्बीजस्य प्रधान्यादयोनिजा अपि पुत्त्रा दृश्यन्त

इति वैाधायनीयहेतुदर्शनाच्च। भारतेऽपि। माता भ्राता पितुः पुत्रो येन जातः स एव होति। श्रुतिरपि आत्मा वै जायते पुत्त्र इति। मानवे दद्यातामित्युभयकर्तृकताश्रवणाच्चोभयाधिकारो मुख्यः॥

अतएव वशिष्ठः॥ शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति॥ वैाधायनेऽपि॥ मातापित्रोरेव संसर्गसाम्यादिति॥ अतएव मातापिता वा दद्यातामिति मनुना मातुर्भर्त्रनुज्ञानसापेक्षत्वाज्जघन्यत्वं स्त्र्यनुज्ञाननैरपेक्ष्यात्पितुर्मध्यमत्वं जनकतासाम्यादुभयोर्मुख्यत्वमभिप्रेत्य पूर्व्वपूर्व्वस्वरसादुत्तरोत्तरमभिहितम्॥ नचेदमेकमेव वाक्यं द्विवचनान्तैकक्रियाश्रवणादिति वाच्यम्। मध्ये विकल्पासङ्गतेः तस्माद्विकल्पत्रयमेव॥

अतएव योगीश्वरः॥ दद्यान्माता पिता यं वेति प्रत्येकमेकवचनान्तमेव क्रियापदमुदाजहार॥ तत्रापि निमित्तमाह प्रयत्नत इति। प्रकृष्टो यत्नो यस्मिन् कालेऽसौ प्रयत्न आपत्कालस्तेन चापत्काल एव पुत्त्रदानं नान्यथेत्यर्थः॥

यथाह कात्यायनः॥ आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा। अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चय इति प्रक्रमात्पुत्त्रदाराणाम्॥

मनुरपि॥ माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदीति॥ आपदि दुर्भिक्षादावनापदि दाने दातुर्दोषः अन्यथा न प्रवर्त्तेतेति निषेधात् यद्वा प्रयत्नत इति प्रतिग्रहीतुः प्रयत्नादापद्यपुत्त्रत्व इति॥ अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदेत्यत्रिस्मरणात् व्याख्यातञ्चैवमेवापरार्कचन्द्रिकाभ्याम्। आपदि ग्रहीतुरपुत्त्रत्व इति॥

विशेषान्तरमपि कालिकापुराणे। दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः। आयान्ति पुत्त्रतां सम्यगन्यवीजसमुद्भवाः। पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथवीपते। आचूडान्तं न पुत्त्रः स पुत्त्रतां याति चान्यत इति। चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। ऊर्द्धन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप। गृहीत्वा पञ्चवर्षीयं पुत्त्रेष्टिं प्रथमञ्च

रेत्। पौनर्भवन्तु तनयं जातमात्रं समानयेत्। कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै। सर्व्वांस्तु कुर्य्यात्संस्कारान् जातकर्म्मादिकान्नरः। कृते पौनर्भवष्टोमे सुतः पौनर्भवस्तत इति॥ दत्तेति अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रति गृहीत्वा स्वगोत्रेण सम्यक् स्वसूत्रोक्तविधिना जातकर्म्मादिभिः संस्कृतास्चेत्त दैव प्रतिग्रहीतुःपुत्त्रतां प्राप्नुवन्ति नान्यथेत्यर्थः॥

तदाह वशिष्ठः॥ अन्यशाखोद्भवो दत्तः पुत्त्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति। दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणम्। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयं दत्तश्च दासश्च षडिमे पुत्त्रपांसनाः। अभावे पूर्व्वपूर्व्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयन्दत्तं दासं राज्ये न योजयेदिति पूर्व्वोपक्रमात्। योयश्चैानर्भवादीनां राज्यनियोजनाभावः स औरसव्यतिरिक्ताभाव एव अभावे पूर्व्वपूर्व्वेषामित्यस्यैवानेनापवादात्। सत्यौरसे तु राज्याभावस्य। न क्षेत्रजादींस्तनायान् राजा राज्येऽभिषेचयेत्। पितॄणां साधयेन्नित्यमौरसे तनये सतीत्यनेन प्रागेवाभिधानात्। सत्यौरसे क्षे जादीन् राज्ये नैवाभिषेचयेत्। पितॄणां नित्यं श्राद्धादि चैव न साधयेन्न कारयेदित्यर्थः। गोत्रेणेति यद्यपि जातकर्म्मादिसाक्षाद्गोत्रस्य करणता न श्रूयते तथापि तदङ्गभूते वृद्धिश्राद्धे तत्सम्बन्धावश्यम्भावात् प्रधानेऽपि तत्सम्बन्ध इति। चूडादिषु साक्षादेव तत्सम्बन्धः। शिखा अपि च कर्त्तव्याः कुमारस्यार्षसङ्ख्ययेति स्मरणात्। संस्कारैः पुत्त्रत्वमित्युक्तम्। तानेवान्वयव्यतिरेकाभ्यामाह पितुर्गोत्रेणेति। यः पुत्त्र आचूडान्तं चूडान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्त्रतां न याति। अयमत्राभिसन्धिः। अत्र कृतचूडस्य परिग्रहीतृपुत्त्रताभावप्रतिपादनमसाधारणपुत्त्रतां विषयीकरोतीत्यवश्यं वाच्यम्। अन्यथा गृहीत्वा पञ्चवर्षीयमित्यनेन कृतचूडस्यापि परिग्रहीतृपुत्त्रताप्रतिपादनविरोधात् गृहीत्वेत्यस्य च कृतचूडविषयत्वावश्यम्भावः स्पष्टमिष्यते। ततश्च चूडान्तसंस्कारसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति गोत्रद्वयेन संस्कृत

त्वात् । तस्य च फलं गोत्रद्वयसम्बन्ध इत्यग्रे वक्ष्यते । अनेन जातकर्मादीनां चूडान्तानां संस्काराणां पुत्त्रताहेतुत्वमुक्तम् । आचूडमिति वक्तव्ये यदन्तग्रहणं तदकृतार्धसमस्तशिखस्य पुत्त्रीकरणाभ्यनुज्ञानार्थं प्रधानानिष्पत्त्या पुत्त्रतार्हत्वात् । चूडाद्या इति वक्ष्यमाणत्वाच्च । अकृतजातकर्माद्यसम्भवे कथमित्यत आह । चूडाद्या यदीति । यदि चूडाद्याः संस्कारा निजगोत्रेण प्रतिग्रहीतृगोत्रेण कृता वै शब्दोऽवधारणे । तदैव दत्ताद्यास्तनयाः स्युरन्यथा ते दासा उच्यन्ते इति । चूडा आद्या येषां ते तथेति नतु चूडाया आद्या इति पूर्व्वेण पौनरुक्त्यापातात् । अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः । तथा चाकृत जात कर्मादिर्मुख्योऽकृतचूडोऽनुकल्प इति सिद्ध्यति । दत्ताद्या इत्यादि पदेन कृत्रिमादिग्रहणमित्युक्तमेव । तेषामपि संस्कारैरेव पुत्त्रत्वं न परिग्रहमात्रेण अन्यथा दास उच्यत इति विपक्षबाधकात् । अन्यथा चूडाद्यकरणे कृतचूडादिपरिग्रहे वा दासता भवति नतु पुत्त्रत्वमित्यर्थः । अस्य पुत्त्रत्वस्य यूपत्वादिवत्संस्कारजन्यत्वात् असंस्कृतः पुत्त्रीकार्य्यइति स्थितम् । तत्रावध्यपेक्षायामाह । ऊर्द्ध्वमिति । असंस्कृतोऽपि पञ्चमादूर्द्ध्वं न ग्राह्यः कालाभावेन पुत्त्रत्वानुपपत्तेः । अनेन पञ्चैव वर्षाणि पुत्त्रपरिग्रहकाला इत्युक्तम्भवति तद्व्यतिरेकेणाभिधानन्तु पञ्चमानन्तरं गौणोऽपि कालो नास्तीति प्रतिपादनाय अन्यथा स्वकालादुत्तरः कालो गौणः सर्व्वः प्रकीर्त्तित इतिन्यायेन पञ्चमानन्तरस्य गौणकालत्वापत्तेः । ततश्च जननमारभ्यातृतीयवर्षं तत्रापि तृतीयवर्षस्य मुख्यकालतया ऊर्द्ध्वन्तु पञ्चमाद्वर्षादित्युपसंहारे वर्षश्रवणाच्चात्रापि चूडाशब्दस्य तृतीयवर्षपरतैवाभिप्रेतेति गम्यते । अन्यथोपनीतिसहभावपक्षे अष्टमवर्षमकृतचूडस्य परिग्रहापत्तेः । नचेष्टापत्तिः ऊर्द्ध्वन्तु पञ्चमाद्वर्षादित्यनेन विरोधात् । तस्मादाचूडान्तमित्यत्र चूडाशब्दस्तृतीयवर्षपर एव युक्तः तृतीयानन्तरमापञ्चमं गौणः । ऊर्द्ध्वन्तु गौणोऽपि नेति स्थितम् । सुता इत्यनेन पुत्त्रत्वानुत्पत्तावपि चूडादिसंस्कारा उत्पद्यन्त एव तत्तत्कालसद्भावादित्युक्तम् । तथापि दासतैव पुत्त्रत्वाभावात् । इदञ्च तृतीयं दासतानिमित्तम् । यत्तु कात्यायनस्मरणम् विक्रयश्चैव दानञ्च न नेयाः स्युरनि

च्छवः। दाराः पुत्त्राश्चेत्यनिच्छूनां दानादिनिषेधः। सोऽपि पञ्चवार्षिकस्यैव नाधिकस्येति व्याख्येयम्। यच्च सदृशन्तु प्रकुर्य्याद्यमिति वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं नतु बालमिति सर्व्वज्ञेन व्याख्यातम् तदपि पञ्चवार्षिकमेव। विचक्षणं चातुर्य्यविशेषेण नतु बालं बाल आषोडशाद्वर्षादिति लक्षणविशिष्टं न कुर्य्यादित्यर्थ इति व्याख्येयम्। तच्चसंस्कृताभावे कथमित्यत आह गृहीत्वेति। पञ्चवर्षीयं चूडादिसंस्कारसंस्कृतमित्यर्थः। ननु कथं तस्य ग्रहणं दासतोऽभिधानादित्यत आह पुत्त्रेष्टिमिति। अयमत्राभिसन्धिः अग्नये पुत्त्रवान् पुरोडाशमष्टाकपालं निर्व्वपेदिन्द्राय पुत्त्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजाफलकत्वमिष्टेः श्रूयते। तत्र चानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या यत्र तूत्पन्ना परिगृह्यते तत्रोत्पत्तेरभावात्तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते प्रकृतविध्यन्यथानुपपत्तेः। तच्च दासत्वापनोदमृतेन सम्भवतीति तदपनोदोऽप्यवश्यमभ्युपेयः। अन्यथा प्रजात्वमात्रसम्पादकत्वे पुत्त्रपरिग्रहमात्रे स्यात्। यदि च संस्कारैरेव तत्र पुत्त्रत्वोत्पत्तेर्न्न तदपेक्षेति। तर्हि प्रकृतेऽपि तुल्यं प्रथमपदेनात्र तत्सूचनात्। सर्व्वांस्तु कुर्य्यात्संस्कारान् जातकर्म्मादिकान्नर इत्यन्तेऽभिधानाच्च। तस्मात्पुत्त्रेष्ट्या पूर्व्वं संस्कारप्रयुक्तदासत्वापनोदपूर्व्वकप्रजात्वसम्पादनात् संस्कृतोऽपि परिग्राह्य इति स्थितम् यद्येवं तर्हि संस्कृतमित्येव वाच्यम्। किं पञ्चवर्षीयपदोपादानेनेति चेन्नैवम्। पञ्चवर्षीयस्यैवेति नियमार्थत्वात्। नियमश्चाक्षरग्रहणपूर्व्वकब्रह्मवर्च्चसफलकोपनयनप्राप्त्यर्थः। नचायन्नियमः। पूर्व्ववाक्येनैव सिद्ध इति वाच्यम्। तस्याकृतसंस्कारावधिसमर्प्पकत्वेन प्रकृतार्थलाभावे प्रतिगृहीतत्वात्। प्रथममिति संस्कारेभ्यः प्रागित्यर्थः। ननु परिग्रहहोमादेव प्रागिति कुतो नेष्यते गृहीत्वेति साकाङ्क्षाया ग्रहणभावनायाः क्त्वाप्रत्ययेन पूर्व्वकालतावगमात्। पुत्त्रेष्ट्या पूर्व्वं संस्कारापनोदेन संस्कारान्तरावश्यापेक्षणाच्चेति। यदुक्तं ऊर्द्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता इति। तस्यापवादमाह पौनर्भवन्त्विति। अक्षतायां क्षतायां वा जातः पौनर्भवः सुत इति। अनेन सप्तविधायामपि पुनर्भ्वां जातः संगृहीतः जात

मात्रमुत्पन्नमात्रम् तेनोत्पत्ति काल एव न कालान्तर इत्यर्थः। समानयेत्परिग्रहविधिना परिगृह्णीयात्॥ ननु जातमात्रस्य जातकर्म्मैवोचितम्। कुमारञ्जातम्पुरान्यैरालम्भादिति सूत्रात्तत्कथमुच्यते जातमात्रं समानयेदिति सत्यं अपरिगृहीतस्य स्वसुतत्वाभावे संस्कारानुपपत्तेः। संस्कुर्य्यात् स्वसुतान् पितेति स्मरणात्। नच वीजसम्बन्धादेव स्वत्वं। वीजाद्योनिर्ब्बलीयसीत्यपवादात् समयादन्यस्येति गौतमस्मरणाच्च अन्यस्य जनयितुः पुत्रः समयादेवेत्यर्थः। तस्माद्त्र जातकर्म्मणः प्राक्परिग्रह इति। परिग्रहानन्तरं संस्कारप्राप्तावपवादमाह। कृत्वेति जातमात्रस्य परिग्रहानन्तरं पौनर्भवष्टोमम्विधाय पश्चाज्जातकर्म्मादिसंस्कारान् कुर्य्यादित्यर्थः। नन्विदमनुपपन्नम् जातेष्टिन्यायविरोधात्। तथाहि यथा जातेष्टिर्विधीयते तथात्र पौनर्भवष्टोमो विहितः स च जातकर्म्मणः प्राक् क्रियमाणः प्रधानं विरुणद्ध्येव। पश्चात्तत्साध्यत्वात्तस्येति चेदुच्यते। नात्र पौनर्भवष्टोमो जातेष्टिवदपूर्व्वो विधीयते। किन्त्वन्यत्रोत्पन्नस्य तस्य जातकर्म्मादीनाञ्च क्रममात्रं। यथा दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति तेन न कोऽपि विरोधः। वेशब्देऽवधारणे जातमात्रस्यैव न कालान्तर इत्यर्थः। तेनास्य जातेष्टिवदेव पूर्व्वकालतादिनियमोऽपि न सिद्ध्यतीति। सर्व्वपदेनैव सिद्धौ जातकर्म्माद्युपादानं तत्पूर्व्वभाविनां गर्भसंस्काराणां निवृत्त्यर्थम्। जातकर्म्माद्युपादानेऽपि यत्सर्व्वपदोपादानं तद्यस्य यावन्तः संस्कारास्तस्य तावत्प्राप्त्यर्थं ततश्च शूद्रादीनामुपनयनाद्यभावेऽपि चौडादिभिरेव पुत्त्रत्वम्भवतीति कल्प्यम्। नर इति सामान्योपादानेपि पौनर्भवष्टोमे त्रैवर्णिकस्यैवाधिकारादन्येषान्तु संस्कारमात्रेणैव पुत्त्रत्वमिति। पौनर्भवष्टोमसंस्कारयोर्म्मिलितयोः पुत्त्रत्वहेतुतामुपसंहरति। कृत इति पौनर्भवष्टोमे कृते ततस्तैः संस्कारैः पौनर्भवः सुतो भवतीत्यर्थः। प्रासङ्गिकं पौनर्भवधर्म्ममाह। एकोद्दिष्टं पितुः कुर्य्यात् न श्राद्धं पार्व्वणादिकम्। पौनर्भवः पुत्त्रः पितुः क्षयाहे एकोद्दिष्टमेव कुर्य्यात् न पार्व्वणादिकम्। आदिशब्दात्पार्व्वणविकृतीनामपि निषेधः। प्रत्यब्दं पार्व्वणेनैव विधिना क्षेत्रजौरसौ। कुर्य्यातामितरे

कुर्य्युरेकोद्दिष्टं सुता दश्चेति जातूकर्ण्यस्मरणात्। पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्। सर्व्वत्रानेकगोत्राणामेकोद्दिष्टं चयोऽर्हनीति पराशरस्मरणाच्च। पुत्रो द्वे च स्वयं दत्तश्च दासश्चेत्युक्तम्॥

तत्र दासलक्षणमाह। क्रीता या रमिता मूल्यैस्सा दासीति निगद्यते। तस्यां यो जायते पुत्रो दासपुत्रस्तु स स्मृतः। या सवर्णापि मूल्यैः क्रीता सती रमितोपभुक्ता सा दासीत्युच्यते पूर्व्वैः। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पैत्र्ये दासीं तां कवयोविदुरिति स्मरणात्। तस्यां जातो दासपुत्रो दास्याः पुत्रो दासपुत्रः छान्दसः पुम्बद्भावः यद्वा दासश्चासौ पुत्रश्चेति यद्वा दासाभिधः पुत्र इति॥

तद्धर्म्मानाह। न राज्ञो राज्यभाक् स स्यात् विप्राणां श्राद्धकृन्न च। अधमः सर्व्वपुत्रेभ्यस्तं तस्मात्परिवर्ज्जयेत्। स राज्ञो राज्यभाक्न विप्राणां श्राद्धकृच्च न स्यात् यस्मात्सर्व्वपुत्रेभ्योऽधम इत्यर्थः॥

कीदृश इति निरूपितमिदानीं कथमिति निरूप्यते॥

तत्र शौनकः॥ शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्। अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च॥ संग्रहं संग्रहणविधिं उपोष्य संग्रहदिनात् पूर्व्वेद्युः

वृद्धगौतमः॥ वाससी कुण्डले दत्वा उष्णीषञ्चाङ्गुलीयकम्। आचार्य्यं धर्म्मसंयुक्तं वैष्णवं वेदपारगम्। मधुपर्केण सम्पूज्य राजानञ्च द्विजान् शुचीन्॥ राजाऽत्र ग्रामस्वामी बन्धूनाहूय सर्व्वांस्तु ग्रामस्वामिनमेवचेति वृद्धगौतमस्मरणात्। यदपि तत्रैवाग्रे मधुपर्कं ततो दद्यात्पृथिवीशाय शासिने इति पृथिवीशपदं तदपि ग्रामस्वामिपरमेव। तस्योपक्रमस्थत्वेन बलवत्त्वात्। द्विजान् चीण् याचनार्थतया मधुपर्कादिना सम्पूज्येत्यर्थः। वर्हिः कुशम यञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः। बन्धूनात्मपितृमातृबन्धून्। ज्ञातीन् सपिण्डान्। बान्धवाद्याह्वानं दृष्टार्थं राजाह्वानवत् बध्नन्ति जानन्त्यात्मीयतया परिगृहीतं नरमित्यर्थे शब्दद्वयसामर्थ्यात्। बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः। बन्धूनाहूतान् ब्राह्मणान् पूर्व्वहूतान् चकाराद्राज्ञ

तान् ज्ञातींश्च सम्भोज्येत्यर्थः। अग्न्याधानादिकं तत्र कृत्वाज्योत्पवनान्तकम्।दातुः समचं गत्वा तु पुत्रन्देहीति याचयेत्। याचनं कारयेत् पूर्व्वक्तैर्ब्राह्मणैरित्यर्थः। दाने समर्थो दातास्मै ये यज्ञेनेति पञ्चभिः। दानसामर्थं बहुपुत्त्रत्वं पत्न्यनुमतिश्चेत्यादिपञ्चभिर्द्द्यादिति शेषः। प्रतिगृह्णीत मानवं सुमेधसं इति मन्त्रलिङ्गात्। देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचञ्जप्त्वा आघ्राय शिशुमूर्द्धनि। वस्त्रादिभिरलङ्कृत्य पुत्त्रच्छायावहं सुतं। पुत्त्रच्छाया पुत्त्रसादृश्यं तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम्। यथा भ्रातृसपिण्डसगोत्रादिपुत्त्रस्य नचासम्बन्धिनि नियोगासम्भवः। वीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यतामिति स्मरणेन निमन्त्रणसम्भवात्। ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः पुत्त्रसादृश्याभावात्। एतदेवाभिप्रेत्योक्तमग्रे तेनैव दौहित्रो भागिनेयश्च शूद्राणाम्विहितः सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति। अत्रापि भागिनेयपदं पुत्त्रसदृशानां सर्व्वेषामुपलक्षणं विरुद्धसम्बन्धस्य समानत्वात्। विरुद्धसम्बन्धस्य नियोगादिना स्वयमुत्पादनायोग्यत्वं। यथा विरुद्धसम्बन्धो विवाहगृह्यपरिशिष्टे च वर्ज्जितः। दम्पत्योर्मिथः पितृमातृसाम्ये विवाहो विरुद्धसम्बन्धो यथा भार्य्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति। अस्यार्थः यत्र दम्पत्योर्व्वधूवरयोः पितृमातृसाम्यं वध्वा वरः पितृस्थानीयो भवति वरस्य वा बधूर्म्मातृस्थानीया भवति। तादृशो विवाहो विरुद्धसम्बन्धः। तत्र यथाक्रममुदाहरणद्वयम्। भार्य्यास्वसुर्दुहिता शालिकापुत्त्री पितृव्यपत्नीस्वसा पितृव्यपत्न्या भगिनी चेति। तथा प्रकृते विरुद्धसम्बन्धपुत्त्रो वर्ज्जनीय इति। यतो रतियोगः सम्भवति तादृशः कार्य्य इतियावत्॥ नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः। यस्त्वा हृदेत्यृचैनैव तुभ्यमग्रे त्वृचैकया। सोमोददित्येताभिः प्रत्यृचं पञ्चभिस्तथा। एवं सप्तभिर्म्मन्त्रैः सप्तचर्व्वाहुतीर्हुत्वेत्यर्थः।

वृद्धगौतमस्तु विशेषमाह। पायसन्तत्र साज्यञ्च शतसङ्ख्यन्तु हावयेत्। प्रजापतेनत्वदेतामित्युद्दिश्य प्रजापतिमिति। एतदनन्तरं ब्राह्मणानां सपिण्डे

ख्वित्यादयः पुत्रदानसम्प्रयत्नत इत्येतदन्ताः श्लोकाः पूर्व्वमेव व्याख्याताः । तदनन्तरं दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः । द्विजोत्तमो ब्राह्मणः । नृपो राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम् । राज्यार्द्धं अर्द्धराज्योत्पन्नमेकवर्षीयं द्रव्यं । प्रदद्यादर्द्धराज्योत्थमेकवर्षाहृतं धनमिति वृद्धगौतमस्मरणात् । इदञ्च महाराजाभिप्रायेण वित्तानां नाणकानां शतत्रयम् । तच्च सौवर्णराजतताम्राणामुत्तममध्यमाधमकल्पनया ज्ञेयम् । शतत्रयं नाणकानां सौवर्णमथराजतम् । प्रदद्यात्ताम्रमथ वा उत्तमादिव्यवस्थयेति वृद्धगौतमस्मरणात् ॥ शूद्रः सर्व्वस्वमेवापि अशक्तश्चेद्यथा बलं । सर्व्वस्वमेकवर्षीयमर्जितलब्धद्रव्यम् । एकवर्षाहृतमिति स्मरणस्याविशेषात्सर्व्वस्वं चान्वये सतीति निषेधाच्च ॥

वशिष्ठस्तु प्रकारान्तरमाह । शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । नत्वेवैकं पुत्रन्दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ऽन्यत्रानुज्ञानाद्भर्त्तुः पुत्रं परिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयात्सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्त्रायत इति तस्मिंश्चेत् प्रतिगृहीते औरस उत्पन्ने चतुर्थभागभागी स्याद्दत्तक इति । अत्र शुक्रशोणितसम्भव इत्यारभ्यान्यत्रानुज्ञानाद्भर्त्तुरित्यन्तं व्याख्यातमेव प्राक् । बन्धूनात्मपितृमातृबन्धून् राजनि ग्रामाधीशे निवेशनं गृहं व्याहृतिभि र्व्यस्ताभिः समस्ताभिश्चाज्यभागान्ते आहुतिचतुष्टयं हुत्वेत्यर्थः । अदूरबान्धवमिति व्याख्यातम् । सन्देहे चोत्पन्ने इति दूरे बान्धवा यस्यासौ दूरबान्धवोऽत्यन्तदेशभाषाविप्रकृष्टस्तादृशस्य परिग्रहे कुलशीलादिविषये सन्देहो भवत्येव तस्मिन् सति तं शूद्रमिव स्थापयेत् । यावन्निर्णयं न व्यवहरेदित्यर्थः तत्र हेतुतया श्रुतिमाह विज्ञायत इति एकेन पुत्रेण बहवः पित्रादयस्त्रातव्या इत्येतदर्थं पुत्रपरिग्रहो न त्वेकेन बहवः पातनीयाः सन्देहे च पक्ष पातनस्यापि सम्भवात् । तस्मात्तं न व्यवहरेत् पाक्षिकस्यापि दोषस्य परिहार्य्यत्वात् । कल्पतरुस्त्वसन्निकृष्टमेव प्रतिगृह्णीयादिति पाठमभिप्रेत्याह । असन्निकृष्टमेव

अविज्ञातगुणदोषमपि अप्यर्थ एवकारः सन्देहइति बान्धवानामसन्निधानात्तु जातिसन्देहे शूद्रत्वेनाध्यवस्य संस्कारहीनमेव स्थापयेत्। शूद्रोपि हि किल पुत्रो भवतीत्यभिप्राय इति तदेतदभिप्रायविवरणमसङ्गतं त्रिजातीयपरिग्रहनिषेधात्। तस्माद्यथाश्रुतमेव साधु। दत्तपरिग्रहानन्तरमौरसोत्पत्तौ विभागे विशेषमाह। तस्मिन्निति। तस्मिन्दत्तके प्रतिगृहीते यद्यौरस उत्पद्यते तदा दत्तकश्चतुर्थांशं लभते न समांशमित्यर्थः। अयमेव विधिः क्रीतादिष्वप्यनुसन्धेयः। तस्य प्रदानविक्रयपरित्यागेष्वित्युपक्रमभेदेन वा व्यवस्थेति ध्येयं।

तैत्तिरीयानान्तु विधिविशेषमाह बौधायनः॥ पुत्रपरिग्रहविधिं व्याख्यास्यामः॥ शुक्रशोणितेत्याद्यन्यत्रानुज्ञानाद्भर्त्तुरित्येतदन्तं वशिष्ठेन समानं प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकञ्चाचार्य्यञ्च वेदपारगं कुशमयं वर्हिः पर्णमयमिध्ममित्यथ बन्धूनाहूय निवेशनमध्ये व्याहृतिभिर्हुत्वा राजनि चावेद्य परिषदिवागारमध्ये ब्राह्मणवागालम्बेन.पविश्य पुण्याहं स्वस्तिऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रम्मे देहीति भिक्षेत ददानीतीतर आह तं परिगृह्णीतेति धर्माय त्वा परिगृह्णामि सन्तत्यै त्वा गृह्णामीत्यथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्वा जुहोति यस्त्वाहृदाकीरिणामन्यमानइति पुरोनुवाक्यमनूच्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानाद्दक्षिणां ददात्येते च वाससी एते कुण्डले एतच्चाङ्गुलीयकं च एवं त्वौरसः पुत्र उत्पद्यते तुरीयभागे सम्भवति इति आहस्म बौधायनः।

यत्तु वृद्धगौतमीयं॥ दत्तपुत्रे यथा जाते कदाचित्त्वौरसो भवेत्। पितुर्वित्तस्य सर्व्वस्य भवेतां समभागिनाविति तदस्य गुणवत्त्वे औरसस्य च निर्गुणत्वे वेदितव्यम्। यथा जात इति विशेषणाद्यथा गुणानां जातं समूहो यस्मिन्निति यथाजातो गुणसमूहवानित्यर्थः। यथा शब्दस्य गुणयोगे सादृश्ये शक्तत्वात्।

अतएव मनुः॥ उपपन्नो गुणैः सर्व्वैः पुत्रो यस्य तु दत्त्रिमः। स हरेतैव तद्रिक्थं सम्प्राप्तो प्यन्यगोत्रत इति औरसाभावे सर्व्वरिक्थग्रहणमुक्तवान्। तद्युक्तमे

वौरसे सत्यङ्कांशहरत्वं । परिग्रहविध्यभावे विशेषमाह स एव । अविधाय विधानं यः परिगृह्णाति पुत्त्रकम् । विवाहविधिभाजन्तं कुर्य्यान्न धनभाजन मिति । परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्य्यं न धनदानमि त्यर्थः किन्तु तत्र पत्न्यादय एव धनभाजः विधिं विना तस्य पुत्त्रत्वानुत्पादात् ।

अतएव वृद्धगौतमः ॥ स्वगोत्रेषु कृता येस्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते इति विधिनैव गोत्रतां यान्तीति नियमः। दानादिविधीनां दत्तकादिलक्षणान्तर्गतत्वेन स्वरूपनिर्व्वाहकत्वात् । यथोक्तं यमद्भिः पुत्त्रमापदि । अप्पूर्व्वग्रहणं सकलदानविधेरुपलक्षणं तेन च प्रतिग्रहविधि रप्याक्षिप्तो भवति । सम्प्राप्तोऽप्यन्यगोत्रत इति मानवात् सम्यग्विधिना प्राप्त इत्यर्थः । क्रीतादय इति आदिशब्देन कृत्रिमापविद्धस्वयन्दत्तानां ग्रहणं । क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्त्रप्रतिनिधीनाहुः क्रियालोपा न्मनीषिण इति मनुना यथोदितानित्यनेन तत्तल्लक्षणसूचितविधिविशिष्टा नामेव पुत्त्रप्रतिनिधित्वाभिधानात् । अतएव कृत्रिमलक्षणे सदृशन्तु प्रकुर्य्याद्य मिति प्रशब्देनापविद्धलक्षणे यं पुत्त्रं परिगृह्णीयादिति परिशब्देन स्वयन्दत्त लक्षणे चात्मानं स्पर्शयेद्य इति दानापरपर्य्यायस्पर्शनशब्देन च विधिपरिग्रह एव कृतस्तदभिप्रेत्यैव वशिष्ठेनापि तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इत्युपक्रम्य परिग्रहविधिरभिहितः पुत्त्रं परिग्रहीष्यन्निति परिग्रहवच नेन च कृत्रिमस्वयन्दत्तपरिग्रहेऽप्येष विधिरनुसन्धेयः । मनुना तत्तदुपसर्गेण सूचनात् । तस्मादेषां पञ्चानां पुत्त्राणां शौनकवशिष्ठान्यतमविधिपरिग्रहेणैव पुत्त्रत्वं नान्यथा ॥

यथा क्षेत्रजे उपपादितं मनुयाज्ञवल्क्याभ्यां । नियुक्तायामपुत्त्रायाम्पुत्त्रो जातोऽविधानतः । नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः । नियुक्तौ यौ विधिं हित्वा वर्त्तेयातां तु कामतः । तावुभौ पतितावित्यादिविध्यन्वय व्यतिरेकानुसरणात् । यत्तु मिताक्षराटीकायां सुबोधिन्यां तत्र स्वत्वं पुत्त्रत्वादि वल्लौकिकं मन्यन्ते वृद्धा इत्यभिहितं तदुक्तवचनविरोधादय दत्तक्रीतकृत्रिम

पुत्त्रिकापुत्त्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसङ्गतकुलीनाद्व्यामुष्यायणा भव न्तीति पैठिनसिनार्षेण ऋष्युक्तेनैव परपरिग्रहेण पुत्त्रत्वाभिधानाच्च विरुद्धमित्यु पेक्षणीयम्। न सङ्गताः कुलीना जनककुलीना येषां ते ते च ते अद्व्यामुष्यायणा श्चेति ये आर्षेण विधिना परिगृहीतास्ते जनककुलीनासम्बद्धा अतएवद्व्यामु ष्यायणा भवन्तीत्यर्थः। यद्वा। जनकपरिग्रहीत्रोर्द्वयोरपि संस्कारकत्वे द्व्यामुष्या यणत्वमित्यग्रे वक्ष्यमाणत्वात्। द्व्यामुष्यायणा इत्येवपाठोऽस्तु। मेधातिथिरपि दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्वमाह सत्यपि प्रयोगे इन्द्रादिशब्दवल्लोक तोऽर्थातिशयाच्छास्त्रे चोत्पत्तिविधानात्भार्य्यादिव्यवहारवत् पुत्त्रव्यवहारोऽत्रग न्तव्य इत्यादिग्रन्थसन्दर्भेण। तस्माद्दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्वमिति सिद्धम्। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्त्रत्वाभाव एवेति।

इदानीमौरसदत्तकयोर्दत्तकाक्तविद्व्योस्म्समवाये धनग्रहणमाह स एव। तस्मिन्जाते सुते दत्ते न कृते च विधानके। तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसेति। तस्मिन्नौरसे सति यः सुतो जायते परिग्रहादिना तथार्थ्यस्य तस्यैव तत्स्वं पितुर्व्वित्तस्याञ्जसा स्वभावेन यः स्वामी भवति नान्यस्य सत्यौ रसे परिगृहीतस्य न धनभाक्त्वमित्यर्थः। पुत्त्रोत्पत्तावौरसाभावस्यापि विशे षणत्वात्। तथा दत्ते यथाविधिपरिगृहीते सति योऽकृतविधानकः पुत्त्रस्तयोस्म दत्त एव धनभाक् नाकृतविधानक इत्यर्थः। विधानस्यैव पुत्त्रोत्पादकत्वात्॥

दत्तौरससमवाये न दत्तो ज्येष्ठांशभागित्याह स एव॥ जातेष्वन्येषु पुत्त्रेषु दत्तपुत्त्रपरिग्रहात्। पिता चेद्विभजेद्वित्तं नैव ज्येष्ठांशभाग्भवेदिति दत्तपरि ग्रहानन्तरमौरसोत्पत्तावपि न दत्तो ज्येष्ठांशभागित्यर्थः॥

धर्म्मान्तरमप्याह मनुः॥ गोत्ररिक्थेजनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्र रिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति। दत्त्रिमः सुतो जनयितुर्गोत्ररिक्थे न भजेत्। तथा पुत्त्रं ददतः स्वधा दत्तपुत्त्रकर्त्तृकं श्राद्धं व्यपैति। यतो गोत्र रिक्थानुगः पिण्ड इति एतेन पुत्त्रत्वापादकक्रिययैव दत्त्रिमस्य प्रतिग्रहीतृधने स्वत्वं तत्सगोत्रत्वञ्च भवति। दातृधने तु दानादेव पुत्त्रत्वनिवृत्तिद्वारा दत्त्रि

मस्य खलु निवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते इति चन्द्रिकाकारः।

ननु मनुवचनाज्जनकगोत्रनिवृत्तावपि प्रतिग्रहीतृगोत्रप्राप्तौ किं मान मित्यत आह । वृद्धमनुः। दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता। पञ्चमी सप्तमीतद्वद्गोत्रं तत्पालकस्य चेति। दत्तक्रीतादिपुत्राणां बीजवप्तुर्जनकस्य सपि ण्डतास्त्येव दानादिनापि सा न निवर्त्तते। तस्या अवयवान्वयरूपतया यावच्छ रीरं दुरपनेयत्वात्। अनेनावयवान्वय एव सापिण्ड्यं न पिण्डान्वय इत्युक्तम्भवति पिण्डान्वयस्य व्यपैति ददतः स्वधेत्यपगमावगमात्। सा च सपिण्डता कियतीत्य पेक्षायामाह पञ्चमी सप्तमीति। पञ्चानाम्पूरणी पञ्चमी पञ्चपुरुष व्याप्तेत्यर्थः एवं सप्तमी॥

गोतमोऽपि॥ ऊर्द्धं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमा दिति। अत्र बीजिग्रहणं दत्तकाद्युत्पादकानां सर्व्वेषामपि संग्रहार्थं न केवलं क्षेत्रजोत्पादकस्यैव। य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः। यस्य ते बीजतो जातास्तस्य ते नेतरस्य त्विति मनुस्मरणात्। तस्य ते पुत्रा इति पुत्रत्वप्रतिपा दनं सापिण्ड्यप्रतिपादनार्थं नतु पुत्रत्वोत्पादनार्थम्। पुत्रान् द्वादश यानाहे त्यादिप्रतिग्रहीतृपुत्रत्वप्रतिपादनविरोधात् नेतरस्य प्रतिग्रहीतुरित्यर्थः । नन्वेवं कन्यावदुभयत्रापि सापिण्ड्यमास्तां प्रतिग्रहेण गोत्रवत्सापिण्ड्यस्या प्युत्पत्तेरितिचेन्नैवम्। स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यन्विधीयते इति वृद्धगौतमस्मरणविरोधात्। ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृतास्ते विधिना गोत्रतां सन्ततिं यान्ति परन्तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पाद्यत इत्यर्थः। स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता॥ युक्त ञ्चैतत् पित्रारब्धत्वेन भर्त्रा सहैकशरीरारम्भकत्वाभावेन च यथोभयत्रापि सापिण्ड्यं न सिद्ध्यति तथा दत्तके पित्रारब्धत्वेपि प्रतिग्रहीत्रा सहैकशरीरा रम्भकत्वाभावात् ।

अतएव देवलः । धर्म्मार्थं वर्द्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत्। अंशपिण्ड

विभागित्वं तेषु केवलमीरितमिति केवलशब्देन सापिण्ड्यमेव निरस्तवान्। गोत्रांशपिण्डानां विधानात् नन्वेतत् प्रकृतार्थानुपयोगिधर्मपुत्त्रविषयत्वात्। तथाहि तत्तद्गोत्रेण तस्य तस्यैव गोत्रेण ये पुत्त्रवद्धर्मार्थं वर्द्धितास्तेषु पुत्रेषु केवलमंशपिण्डविभागित्वमेव न वर्द्धकसापिण्ड्यमित्यर्थात् तेनैतत्पुत्त्रस्यैव वर्द्धकसापिण्ड्याभावं बोधयति न दत्तकस्येति चेन्नैवम्। पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवोमनुरिति परिसङ्ख्याविरोधेन धर्मपुत्त्रानभ्युपगमात्। अभ्युप गमेऽपि वा पत्न्यादिस्वगणनेनांशभागित्वासम्भवात्। अप्रशस्त्या सापिण्ड्यनिषेधा सङ्गतेश्च। तस्माद्दत्तपुत्त्रविषयमेवैतत्। अंशभागित्वप्रदर्शनात् तत्र चायमर्थः धर्मार्थं स्वस्यालोकतापरिहारकधर्मसम्पत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्न गोत्रेणापि परिग्रहीत्रा पुत्त्रवत्पुत्त्रप्रतिनिधितया परिगृह्य ये पुत्त्रा वर्द्धितास्तेषु केवलपरिग्रहीत्रंशपिण्डविभागित्वमेव न सापिण्ड्यमिति तस्मादत्र दत्तके न परिग्रहीतृसापिण्ड्यं किन्तु जनककुल एव साप्तपुरुषं सापिण्ड्यमिति सिद्धम्।

नन्वेतच्छब्देन सन्निधानाद्वीप्सापेक्षितश्रुतबहुत्वानां पुत्त्राणामेव परामर्शो गम्यते॥ न वर्द्धकानां पुत्त्रिणां व्यवहितत्वात् सन्दिग्धबहुत्वानां वीप्सान्वया योग्यत्वाच्च। आत्मनि परोक्षवन्निर्द्देशक तच्छब्दान्वयानुपपत्तेरपरोक्षनिर्द्देशक स्वशब्दस्यैवौचित्याच्चेति चेन्नैवंवादीः। सर्व्वनाम्नां बुद्धिस्थे शक्तिरिति न्यायेन बुद्धिस्थितायाः प्राधान्यायतत्वात् प्राधान्यस्य च संस्कार्य्यत्वेन फलान्वयेन वा सम्भ वात्॥ पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रियेत्यादिवचनपर्य्यालोचनया पुत्त्रकर्तृकपिण्डदानादिक्रियया पितुः संस्कार्य्यत्वावगमात् पुत्त्रेण लोकान् जयतीत्यादि वचनबलात् पितुरेव पुत्त्रकरणकभावनाभाव्यलोकरूपफलयोगि तया प्राधान्यात्तच्छब्देन परामर्शो युज्यते यथा तप्ते पयसि दध्यानयति सा वैश्व देव्यामिक्षेत्यत्राभिक्षायाः संसृष्टदधिपयोरूपत्वेन सान्नाय्यविकारत्वे स्थिते पूर्व्व पक्षिणा सप्तमीनिर्द्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्द्दिष्टस्य दध्नः प्रधानत्वात्त स्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्धात्। सायं दोहविकारत्वमित्युक्ते सिद्धान्तिना कर्म्मीभूतेनापि दध्नापयसो व्याप्यमानत्वेन दध्नापयः संस्कुर्य्यादिति

वाक्यार्थस्य पर्य्यवसानत्वेन प्रथम एव प्रधानत्वं तस्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्ध इति प्रातर्दोहविकारत्वं साधितम्। तद्वत्प्रकृतेऽपि पितुः संस्कार्य्यत्वेन प्रधानत्वात्तच्छब्दादेव तस्यैव परामर्श इति युक्तम्। नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथन्विवाहो न स्यादिति चेत्सत्यम्। सगोत्रत्वादिति ब्रूमः। तर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु सगोत्रत्वसपिण्डत्वयोरभावात्। नत्वाहत्यनिषेधकं वचनमुपलभामहे। प्रत्युत सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत्। तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृदित्याद्यनुकूलमेव वचनमस्ति न चेष्टापत्तिः अविच्छिन्ना विगीतसकलदेशीयशिष्टाचारविरोधात् तस्मात्किं तत्राविवाह निमित्तमिति॥

अत्र केचिदुच्यते। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने इत्यत्र मनुवाक्ये स्वस्याऽसापिण्ड्येपि वक्तव्ये यत्पितुरसपिण्डावचनं तद्दत्तकस्य प्रतिग्रहीतृसपिण्डाया विवाहो माप्रसाङ्क्षीदित्येवमर्थं अन्यथा पितृद्वारके सापिण्ड्ये मूलपुरुषादष्टमस्य वरस्य मातृद्वारके सापिण्ड्ये मूलपुरुषात्षष्ठ्याः कन्याया विवाहो न स्यात् पितुःसपिण्डत्वेनासपिण्डताभावात् न चेष्टापत्तिः पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथेत्यादिसकलस्मृतिनिबन्धशिष्टाचारविरोधात्। नचेदं दूषणं दत्तकेऽपि समानं अष्टमस्य तस्य षष्ठ्याः कन्यायाः पितुः सापिण्ड्यत्वेनाविवाह्यत्वप्रसङ्गादिति वाच्यम्। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तत इति वक्ष्यमाणवाक्येन सप्तमस्य दत्तकपितुर्मूलपुरुषासपिण्डत्वेन षष्ठ्याः कन्यायास्तदसापिण्ड्येन षष्ठ्याः सप्तमस्य च पितुः सपिण्डत्वाभावादित्युक्तमेव। तस्माद्दत्तकसापिण्ड्यनिर्णायकमिदमेव वचनमिति कानुपपत्तिः। तदतिभ्रान्तप्रलपितं विकल्पासहत्वात्। तथाहि किमिदं दत्तकस्यैव सापिण्ड्यनिर्णायकं उत दत्तकौरसयोरुभयोरिति नाद्यः द्वेधा ह्यस्य वचनस्य दत्तकविषयतासम्भवेत्। दत्तकप्रक्रमादा दत्तकसापिण्ड्यनिर्णायकविशेषवचनैकवाक्यत्वाद्वा। न चेदोभयमप्यस्ति अनुपलम्भात्। किञ्चास्य दत्तकपरत्वेऽत्रत्यं पितृपदं गौणप्रतिग्रहीतृपितृपरं स्यात् तच्चानिष्टं न विधौ परः शब्दार्थ इति न्यायविरोधात्

नाप्यन्वयः पितृपदे युगपद्वृत्तिद्वयनिषेधात् । नच गङ्गायां मीनघोषावित्यत्रैव वृत्त्यन्तरतात्पर्य्यग्राहकं प्रमाणमस्ति तस्मादौरसविषयमेवेदम्वचनं । गर्भाधानादिप्रक्रमात् पञ्चमात्सप्तमादर्व्वाक् इति वचनान्तरैकवाक्यत्वाच्च । नचास्यौरसपरत्वे कूटस्थादष्टमस्य वरस्य षष्ठीकन्याया अनुद्वाह्यत्वप्रसङ्गः । पितुरसपिण्डत्वाभावादित्युक्तमेव दूषणमिति वाच्यम् । तस्य पितुरिति पञ्चम्यां षष्ठीभ्रमनिबन्धनत्वेनादूषणत्वात् । अत एव योगीश्वरेण मातृतः पितृतस्तथेत्यत्र पञ्चमीत्वनिर्णायकस्तसिल् प्रयोग आदृतः तत्रापि सार्व्वविभक्तिकत्वशङ्कायां ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति गौतमवाक्ये पञ्चम्या निर्णय इति न किञ्चित्समाधानमिति समाधानान्तरम्वक्तव्यम् ।

तदपरे आहुः । क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्त्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इत्यत्र वाक्ये क्षेत्रजादीनां पुत्त्रप्रतिनिधित्वाभिधानात् प्रतिनिधिस्तद्धर्म्मा स्यादिति न्यायेन सकलौरसधर्म्मप्राप्त्या प्रतिग्रहीत्रादिपितृसपिण्डवर्ज्जनं सेत्स्यतीति तत्र न सापिण्ड्यम्विधीयत इत्यनेन निषिद्धस्य सापिण्ड्यस्यातिदेशासंभवेनाप्राप्त्या तद्वर्ज्जनासम्भवात् एतेन पुत्त्रनाम्ना औरसधर्म्मातिदेशात् प्रतिग्रहीत्रादिपितृसपिण्डावर्ज्जनसिद्धिरित्यपास्तं नतौ पशौ करोतीतिवन्निषिद्धस्य सापिण्ड्यस्यातिदेशासम्भवे न वर्ज्जनासम्भवात् । तस्मादनन्यगत्या वाचनिकमेव प्रतिग्रहीतृकुले सापिण्ड्यमभ्युपगन्तव्यमिति तदुच्यते द्विविधं हि सापिण्ड्यमवयवान्वयेन पिण्डान्वयेन चेति । तत्रावयवान्वयसापिण्ड्यस्य दत्तके प्रत्यक्षबाधितत्वेन हेमाद्रिः पिण्डावयवान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यतिष्ठिपत् ॥

तथाच कार्ष्णाजिनिः ॥ यावन्तः पितृवर्गाः स्युस्तावद्भिर्द्दत्तकादयः । प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह । द्वाभ्यां सहाय तत्पुत्त्राः पौत्त्रास्त्वेकेन तत्समं चतुर्थपुरुषच्छेदं तस्मादेषा त्रिपौरुषीति ॥ अस्यार्थः ॥ दत्तकादयः पुत्त्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्वे शुद्धदत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड्वा तत्राद्ये पितृपितामहप्रपितामहास्त्रयः द्वितीये

प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः तृतीये प्रतिग्रहीत्रादयस्त्रयः जनकादयस्त्रय इति षट्तावद्भिस्त्रिभिस्त्रिभिः षड्भिर्वा सहप्रतिग्रहीत्रादीनां योजनं कुर्य्युः प्रतिग्रहीतुः पितुर्थे यावन्तः पितृवर्गास्त्रयः षड्वा तेषां सर्व्वेषां स्वपुत्रकर्तृके दत्तकसपिण्डीकरणे देवतात्वबोधनाय स्वकीयत्वविशेषणोपादानं ततश्च प्रतिग्रहीतृपितृणाम्मध्ये त्रयाणां वा दत्तकसपिण्डीकरणे देवतात्वप्राप्तौ विशेषमाह द्वाभ्यामिति त्रिषु पितृषु द्वाभ्यां षट्सु चतुर्भिः एवं दत्तकपौत्त्राः स्वपितृसपिण्डीकरणं स्वपितामहप्रतिग्रहीतुस्त्रयाणाम्पितृणां मध्ये एकेन प्रतिग्रहीतुःपित्रा द्व्यामुष्यायणत्वे द्वाभ्याम्वा पितामहप्रपितामहाभ्याञ्च सह कुर्य्युः। अमुमेव न्यायं दत्तकतत्पुत्त्रयोरप्यदिशति। तत्सममिति तत्सपिण्डीकरणं दत्तकतत्पुत्त्रयोरपि द्व्यामुष्यायणत्वे समं पितृवर्गद्वयेन कार्य्यम्वा। नन्वेवं दत्तकप्रपौत्त्रेण स्वपितुर्द्दत्तकपौत्त्रस्य सपिण्डीकरणे दत्तकपुत्त्रदत्तकतत्प्रतिग्रहीतृभिस्त्रिभिः सह क्रियमाणे प्रतिग्रहीतृपितृणां त्रयाणामन्यतमस्याप्यनुप्रवेशाभावेन सापिण्ड्यंन स्यादित्यत आह चतुर्थपुरुषे छेदमिति। यो यदा स्वपितुः सपिण्डीकरणं करोति स तत्पित्रादिभिस्त्रिभिरेव कुर्य्यान्न चतुर्थेनेत्यर्थः नन्वेवमौरसस्थलेपि सपिण्डीकरणं त्रिभिरेव शास्त्रे सिद्धं तेनैव सिद्धौ वचनान्तरारम्भःक्लेशः किमर्थं इत्यत आह तस्मादिति दत्तकानमेषां पिण्डान्वयरूपा आशौचाऽविवाह्यत्वादिप्रयोजिका त्रिपुरुष्येव सपिण्डता। न लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति मात्स्याभिहिता साप्तपौरुषी तस्याः सामान्यरूपतया विशेषेणापवादात्॥

एतदेवाभिप्रेत्योक्तं संग्रहकारेण॥ दत्तकानान्तु पुत्त्राणां सापिण्ड्यं स्यात्त्रिपौरुषं जनकस्य कुले तद्वद्ग्रहीतुरिति धारणेति॥ यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण। तत्र त्रिकद्वयेन सह सपिण्डीकरणाभिधानात् शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमेवेत्यलम्प्रपञ्चेन। तद्वद्गोत्रमिति तद्वत्सपिण्डतावद्गोत्रमपि वीजवपुर्जनकस्य न केवलं जनकस्याऽपितु तत्पालकस्य च

दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनाम्भवतीति। अनेन सपिण्डता वैलक्षण्यं गोत्रेऽभिहितम् यथा सपिण्डता जनकस्यैव न तथा गोत्रं किन्तूभयोरपि तदिति। नचेदमपि दत्तकमात्रे किन्तु द्व्यामुष्यायणे दत्तकविशेषे तथाहि द्विविधा दत्तकादयो नित्यवत्द्व्यामुष्यायणा अनित्यवत् द्व्यामुष्यायणाश्चेति॥ तत्र नित्यद्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्त्र इति सम्प्रतिपन्नाः अनित्या द्व्यामुष्यायणास्तु ये चूडान्तैः संस्कारैर्ज्जनकेन संस्कृताः उपनयनादिभिश्च प्रतिग्रहीत्रा तेषां गोत्रद्वयेनापि संस्कृतत्वात् द्व्यामुष्यायणत्वं परन्त्वनित्यं जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात्। तस्य प्रतिग्रहीतृगोत्रमेव तदिदं सर्व्वमभिप्रेत्याह सत्याषाढः नित्यानां द्व्यामुष्यायणानां द्वयोरिति सूत्रेण नित्यद्व्यामुष्यायणानां गोत्रद्वये प्रवरसम्बन्धमुक्त्वा तमेवानित्येष्वप्यतिदिशति दत्तकादीनान्तु द्व्यामुष्यायणवदितिसूत्रेण व्याख्यातञ्चैतच्छ्वरस्वामिभिः। द्व्यामुष्यायणप्रसङ्गेनानित्यानामाह दत्तकेति तावदेव नोत्तरसन्ततौ प्रथमेनैव संस्काराः परिग्रहीत्रा चेत्तदा उत्तरस्य पूर्व्वत्वात्तेनैव उत्तरत्र। तथा पितृव्येण भ्रातृव्येण चैकार्षेयेण ये जातास्ते परिग्रहीतुरेवेति। अस्य भाष्यस्यायमर्थः। यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धो नोत्तरसन्ततेः जनकगोत्रसम्बन्धे किं कारणमित्यत आह प्रथमेनेति प्रथमो जनकस्तेनैव संस्कृतत्वात्। संस्काराश्च चौडान्ताः। पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्त्रः स पुत्त्रतां याति चान्यत इति कालिकापुराणात् व्याख्यातञ्चैतत्प्रागेवान्यस्यासाधारणीं पुत्त्रतां न याति। किन्तु द्व्यामुष्यायणो भवतीति प्रथमेनासंस्कारे कथमित्यत आह परिग्रहीत्रा चेदिति। परिग्रहित्रैव जातकर्म्मादिसर्व्वसंस्कारकरणे चौडादिसंस्कारकरणेऽपि वा उत्तरस्य परिग्रहीतुरेव गोत्रम्। तत्र हेतुः पूर्व्वत्वात् संस्कारकरणे प्रथमत्वात् द्व्यामुष्यायणसन्ततौ दत्तकसन्ततौ चापेक्षितं गोत्रमाह। तेनैवेति परिग्रहीतृगोत्रेणैवोत्तरसन्ततेर्गोत्रमुभयत्रापि॥

सगोत्र परिग्रहमाह तथेति। जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः। परिग्रह संस्कारकरणादिति। यत्तु गोत्ररिक्थंजनयितुर्न भजेद्दत्रिमः

सुत इति तत्परिग्रहीत्रैव जातकर्म्मादिसर्व्वसंस्कारकरणपक्षे वेदितव्यम् । ये तु नित्यवत् द्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयं ॥

द्व्यामुष्यायणका ये स्युर्द्दत्तकक्रीतकादयः । गोत्रद्वये ऽप्यनुद्वाहः शुङ्गशैशिरयो र्यथेति पारिजातस्मरणात् । गोत्रद्वयं जनकगोत्रे परिग्रहीतृगोत्रे च दत्तकादीनाञ्च द्व्यामुष्यायणत्वे इदञ्चवचनं नित्यानां द्व्यामुष्यायणानामिति सत्याषाढ वचनं प्रमाणं प्रवरमञ्जर्य्यामप्यनेनैवाभिप्रायेणोक्तं । दत्तक्रीतकृत्रिमपुत्त्रिका पुत्त्रादीनां यथासम्भवं गोत्रद्वयं सप्रवरमस्तीत्येतावता द्विगोत्राणां गोत्रद्वयं सप्रवर विवाहे वर्ज्यमिति ।

शाखापि प्रतिग्रहीतुरेवेत्याह वशिष्ठः ॥ अन्यशाखोद्भवो दत्तः पुत्त्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति । स्वस्य प्रतिग्रहीतुः शाखा यस्मिन् कर्म्मणि तत् स्वशाखं कर्म्म तद्भजतीति स्वशाखभागिति प्रतिग्रहीतृ शाखीयमेव कर्म्म तेन कर्त्तव्यमित्यर्थः । दत्तकादीनाम्मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य मातामहेष्वपि समानत्वात् । यत्तु मातामहश्राद्धविधेर्म्मुख्यमातामहविषयत्वमेवेति हेमाद्र्यभिहितम् । तन्न व्यपैति ददतः स्वधेति वचनविरोधात् । नच मातामहानां दातृत्वाभावः । बन्धूनाञ्चैत्यनेन दानसम्मतिकरणेन तेषामपि दातृत्वात् । किञ्च श्राद्धे गोत्ररिक्थानुगः पिण्डो व्यपैति इत्यनेन गोत्ररिक्थयोर्न्निमित्तताप्रतिपादनाद्दत्तकस्य च पितृ रिक्थस्यैव मातामहरिक्थस्याप्यपेतत्वान्न पूर्व्वमातामहश्राद्धाधिकार इति युक्तं अत एवास्वरसात् गौणमातामहादीनामपि गौणपितृवत् श्राद्धं कर्त्तव्यमिति हेमाद्रिरेव पक्षान्तरमुपन्यस्तवान् । युक्तञ्चैतदेव दत्तकस्यौरसप्रतिनिधितया औरसकार्य्यकर्तृत्वेन औरसकर्तृकश्राद्धदेवतोद्देश्यकश्राद्धकर्त्तृत्वमेव सिद्ध्यति प्रतिग्रहीतृपितृगोत्र शाखाकुलदेवताकुलधर्म्मान्वयवत् प्रतिग्रहीतृगोत्राद्यन्वया विशेषात् । वाञ्छन्ति पितरः पुत्त्रान् गयां यास्यति यः पुत्त्र इत्यादौ पुत्त्रपदाविशेषात् किञ्च प्रतिग्रहीत्र्या मातुरासुरादिविवाहोढात्वे पितापितामहे योज्यः सम्पूर्णे वत्सरे सुतैर्म्मातामहे योज्या इत्याह भगवान् यम इत्यादिविहितसपिण्डी

करणे पालकमातृपितुरेव मातामहत्वेन अन्यत्रापि श्राद्धे तद्दैवतात्वौचित्यात्। तथा दत्तकादीनाम्परिवेत्रादिदोषोऽपि न। भिन्नोदरे चदत्ते च पितृव्यतनये तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदने इति गौतमस्मरणात्। भिन्नोदर इति सापत्न्यभ्रात्रोरन्यतरस्य विवाहादौ न परिवेत्तादिदोष इत्येतदर्थं दत्ते चेति जनककुले ज्येष्ठभ्रातृसत्त्वेऽपि न दत्तस्य विवाहादौ परिवेतृत्वम्। नापि कनिष्ठविवाहादौ ज्येष्ठस्य परिवित्तित्वमित्येतदर्थं पितृव्यतनयइति देवरेणोत्पादितस्य भ्रातुः क्षेत्रजपुत्रस्य विवाहादौ देवरपुत्रस्य न परिवित्तिपरिवेतृत्वादिदोषो देवरपुत्रविवाहादौ वा क्षेत्रजस्येत्येतदर्थं न यथाश्रुतपितृव्यपुत्राभिप्रायं परिगृहीतस्य दत्तपदेनैवोपादानादपरिगृहीतस्य च प्रसक्त्यभावेन निषेधाप्रवृत्त्या प्रतिप्रसवासम्भवात्। न चैतस्मादेव ज्ञापकादपरिगृहीतस्यापि भ्रातृपुत्रस्य पुत्रत्वमिति शङ्कनीयम्। दशानां भ्रातृणामध्ये पञ्चानामपुत्रत्वे पञ्चानाञ्च प्रत्येकं दशऽपुत्राणां पुत्रत्वे भ्रातृणाम्प्रत्येकं पञ्चाशत्पुत्रतापत्तेः। पञ्चाशताञ्च भ्रातृपुत्राणां प्रत्येकं दशपितृकतापत्तेश्चेत्याद्युक्तदूषणगणग्रासात् तस्माद्याख्यातमेव साधु एवं प्रतिग्रहीतृकुलश्राद्धीयद्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलश्राद्धीयद्रव्यञ्च द्व्यामुष्यायणाय न दातव्यं।

सपिण्डाय सगोत्राय श्राद्धीयं नैव दापयेत्। न भोजयेत् पितृश्राद्धे समानप्रवरं तथेति हेमाद्रिपारिजातधृतवचनात्। श्राद्धीयं श्राद्धे दत्तद्रव्यं। औरसपुत्रस्यैवौरसपुत्त्या अप्यपचारे क्षेत्रजाद्याः पुत्त्यः प्रतिनिधयो भवन्ति। मुख्यापचारे प्रतिनिधिरिति न्यायात् मुख्यत्वञ्चास्य दानादिविधौ साधनत्वेन साधनत्वञ्च ऋतुगमनविधिना साधितायाः द्रव्यार्ज्जनविधिनार्ज्जितस्य व्रीह्यादेः क्रतुसाधनत्ववत्तथाहि रात्रिसत्रन्यायेन ऋत्वियात् प्रजां विन्दामहे ऋत्वियात् प्रजां विन्दते इत्याद्यर्थवादोन्नीते ऋतावुपेयात्तस्मिन् संविशेदित्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते। प्रजनयतीति प्रजेति व्युत्पत्त्या प्रजननशक्तिमतः स्त्रीपुंसस्यैव प्रजाशब्दवाच्यत्वात् न नपुंसकस्य तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात्। अतएवानधीत्य द्विजो वेदम

नुत्पाद्य च सन्ततिम्। अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यध इति तादृश्या एव सन्ततेरनुत्पादे अधः पातः स्मर्य्यते संतनोत्यन्वयमिति सन्ततिः प्रजापर्य्याय एव प्रजा स्यात्सन्ततौ जने इति कोषात्। एवमपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं वीजिनो नराः। क्षेत्रम्बीजवते देयं नावीजी क्षेत्रमर्हति इत्यत्रापत्यशब्दो व्याख्यातः अपत्यं कस्मादपततं भवति नानेन पततीति वेति यास्कस्मरणात्। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियस्त्वमी। आहुर्दुहितरं सर्व्वेऽपत्यं तोकं तयोः समे इति कोषाच्च। यच्च पुमान् पुरुमना भवति पुंसतेर्व्वेति यास्कोक्तं पुम्पदं बहुज्ञपरं तदा पुंसतेर्व्वेति तदुक्त्यैव प्रसवकर्तृमिथुनपरमेव व्याख्यायताम्।

अतएव यास्कः। मिथुनाः पुत्रदायादा इति तदेतादृक् श्लोकाभ्याम णुक्तम्। अङ्गादङ्गात्सम्भवसि हृदयादधिजीयसे आत्मा वै पुत्रनामासि स जीव शरदः शतमिति। अविशेषेण पुत्राणां दायो भवति धर्म्मतः। मिथुनानां विस र्गादौ मनुः स्वायम्भुवोऽब्रवीदित्यत्र पुत्रपदं मिथुनपरं दर्शितवान् नचात्र मिथुनपदं पुत्रस्नुषापरमिति वाच्यं। अङ्गादङ्गात्सम्भवसि इत्यस्यासङ्गतेः। न दुहितर इत्येके पुमान् दायादोऽदायादा स्त्रीति विज्ञायत इत्येकीयमते दुहितृ निराकरणासङ्गतेश्च। यच्च नापुत्रस्य लोकोऽस्तीत्यादौ पुत्रपदं तदप्युभयपरमेव। भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति पाणिनिना पुत्रदुहितृपदयोरेकशेषस्मरणात्। एतेनापुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिस्सदेत्यादावप्यपुत्रपदं व्याख्यातं तत्साधनञ्च पुत्रिकाकरणलिङ्गमग्रे वक्ष्यते। अतएवोक्तं तत्समः पुत्रिकासुत इति। अङ्ग दङ्गात्सम्भवति पुत्रवद्दुहितानृणामिति च। यदि चादृष्टैवैकल्येन कन्यानुत्पा दस्तदा कृष्णप्रतिपच्छ्राद्धादिना तत्सम्पादनङ्कार्य्यं कृष्णचतुर्थीश्राद्धादिना पुत्रादृष्टस्येव। यत्तु गमनकरणिकायामेव भावनायामेवं गच्छन् पुत्रं जनये दिति पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्म्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतया अवधृत्यानुवादः पुत्रार्थिप्रवृत्त्यर्थः गुणास्तु युग्मनिशा द्यक्राधिक्यस्त्रीचामतेन्दुसौकर्य्यपुंसवनापूर्व्वादयो योगिमन्वादिभिरेव। एवमि त्यादिना स्पष्टीकृताः आश्वलायनेनापि पाणिग्रहणे पुत्रपुत्र्योर्गुणफलत्वं प्रक

टितं । गृह्णामिते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभय काम इति एतेन स्त्रियोऽयुग्मासु रात्रिष्वित्यपि व्याख्यातम् । तस्मात्पुत्रस्यैव श्राद्धकर्तृत्वेन परलोकसाधनतया पुत्र्यामपि दानश्राद्धादिविधिसाधनत्वेन सिद्ध मुख्यत्वे तदपचारे प्रतिनिधिर्युक्त एव दुहिता दुरहिता दूरे हिता दोग्धेर्वेति निरुक्त्या दुहितु र्दौहित्रद्वारापि पित्रुपकारकत्वं दर्शयति यास्कः ।

मनुरपि ॥ पौत्त्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्त्रवदिति ।

महाभारते गान्धार्य्युक्तिश्च ॥ एका शताधिका बाला भविष्यति गरीयसी । तेन दौहित्रजाल्लोकान् प्राप्नुयामिति मे मतिः । अन्यत्रापि दुहितर एव माता पित्रोः किमौरसाः पुत्राः निपतन् दिवो ययातिर्दौहित्रैरुद्धृतः पुरेमिति । दौहित्रैरष्टकादिभिः कानीनैर्मागधीपुत्रैः । एवञ्चौरसदुहित्रभावे दौहित्रकृत लोकप्राप्त्यर्थं क्षेत्रजादिदुहितॄणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव । नच व्रीहिप्रतिनिधित्वे वचनमस्ति । यद्येवं तर्हि भर्त्रपचारे देवरस्येव भार्य्यापचारे श्यालिकायाः प्रतिनिधित्वं स्यात् । श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्नैवम् । नहि श्वशुरशरीरावयवान्वयेन भार्य्योपादानं किन्तु तस्य संस्कृतस्त्री त्वेन नच तच्छ्यालिकायामस्ति यत्र च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्याः ज्येष्ठाप्रतिनिधित्वम् ।

यथाह व्यतिरेकमुखेन योगीश्वरः ॥ सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत् । सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरेति । तस्मात्सिद्धमासां न्यायत एव प्रति निधित्वम् ॥

तत्र क्षेत्रजगूढजकानीनसहोढपौनर्भवानां पञ्चानां मध्ये क्षेत्रजोत्पादनं मनुरेवाह । देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षय इत्यनेन सन्तानस्योभयविधस्य परिक्षये उभयविधायाः प्रजाया इष्टत्वेन यथायथं प्रतिनिधित्वमित्यर्थः ॥ इतरासु चतसृषु

नोत्पादनविध्यपेक्षा लोकस्वभावसिद्धत्वात् तासाञ्च नामानि पुत्त्रवत्तान्येव प्रवृत्तिनिमित्तस्यामयत्रापि तुल्यत्वात् तासां चौरसप्रतिनिधित्वं विकल्पाव यवारब्धत्वेन न्यायत एव सिद्धं श्रीह्यपचारे नीवाराणामिव अवयववैकल्यञ्च अवयवमात्रान्वयेन भर्त्त्रवयवान्वयाभावात् अस्त्वेवं क्षेत्रजादीनां दुहितॄणामौ रसदुहितृप्रतिनिधित्वं न्यायबलात् दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां न्यायाभावे कथमस्तु प्रतिनिधित्वं मैवं तत्रापि सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति योगिप्रतिपादितसजातीयत्वादिसौसादृश्यसद्भावादस्त्येव न्यायप्रसरः। उपपादितं चैतदधस्तात् पुत्त्रप्रतिनिधिविचारे। ननु क्षेत्रजादीनां पञ्चानां मात्रवयवान्वयेन दत्तकादीनां पञ्चानां सजातीयत्वेनास्तु प्रतिनिधित्व पूर्व्वाभावे परः पर इति क्रमविधानन्तु कथं सादृश्याविशेषादिति चेन्नैवम्। पूर्व्वपूर्व्वश्रेयस्त्वेनेति ब्रूमः। तदाह विष्णुः। एतेषाम्पूर्व्वपूर्व्वः श्रेयानिति श्रेयो दृष्टादृष्टविशेषः दृष्टमवयवप्रत्यासत्त्यादि अदृष्टं शुद्ध्यादि वचनन्तु नियमार्थं यदिसामं न विन्देत् पूतिकानभिषुणयादित्यादिवत् विशेषान्तरमस्मत्कृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामवधेयम् ॥ दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनान्युपलभ्यन्ते॥

तत्र दत्तकाया रामायणे बालकाण्डे दशरथंप्रति सुमन्त्रस्य सनत्कुमारोक्त भविष्यानुवादो लिङ्गम्। इक्ष्वाकूनां कुले जातो भविष्यति सुधार्म्मिकः। नाम्ना दशरथो वीरः श्रीमान् सत्यपराक्रमः। सख्यन्तस्याङ्गराजेन भविष्यति महात्मना। कन्या चास्य महाभागा शान्ता नाम भविष्यति। अपुत्त्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः। स राजानं दशरथं प्रार्थयिष्यति भूमिपः। अनपत्योस्मि धर्म्मज्ञ कन्येयं मम दीयतां। शान्ता शान्तेन मनसा पुत्त्रार्थं वरव र्णिनी। ततो राजा दशरथो मनसाभिविचिन्त्य च। दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः। प्रतिगृह्य तु तां कन्यां स राजा विगतज्वरः। नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना। कन्यां तामृष्यशृङ्गाय प्रदास्यति स वीर्य्यवानित्यादि॥

तत्रैव लोमपादंप्रति दशरथवाक्यम् ॥ शान्ता तव सुता वीर सह भर्त्रा विशाम्यते। मदीयं नगरं यातु कार्य्यं हि महदुद्यतमिति ॥

तत्रैव ऋष्यशृङ्गंप्रति लोमपादवाक्यम् ॥ अयं राजा दशरथः सखा मे दयितः सुहृत्। अपत्यार्थं ममानेन दत्तेयं वरवर्णिनी। याचमानस्य मे ब्रह्मन् शान्ता प्रियतरा मम। सोयन्ते श्वशुरो धीर यथैवाहं तथा नृप इत्यादि। अत्र दीयतां दास्यते प्रतिगृह्य दत्ताशब्दैर्द्दानविधिः स्पष्ट एव। तथा पुत्त्र इत्युपक्रम्य पुत्त्रार्थं इत्युपसंहारादौरसपुत्त्रीवद्दत्तपुत्र्यपि पुत्त्रप्रतिनिधिर्भवतीति गम्यते।

क्रीतायां हेमाद्रौ स्कन्दपुराणे। आत्मीकृत्य सुवर्णेन परकीयान्तु कन्यकाम्। धर्म्मेण विधिना दातुमसगोत्राऽपि युज्यते ॥

लैङ्गेऽपि। कन्यां लक्षणसम्पन्नां सर्व्वदोषविवर्ज्जिताम्। मातापित्रोस्तु सम्वादं कृत्वा दत्वा धनम्महत्। आत्मीकृत्य तु संस्थाप्य वस्त्रन्दत्वा शुभं नवम्। भूषणैर्भूषयित्वा तु गन्धमाल्यैरथार्च्चयेत्। निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम्। उभयोश्चित्तमालोक्य उभौ सम्पूज्य यत्नतः। दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने। साक्षादधीतवेदाय विधिना ब्रह्मचारिण इति। अत्र सुवर्णेनात्मीकृत्य धनन्दत्वेत्यादिशब्दैः क्रयविधिः स्पष्ट एव।

कृत्रिमाया हरिवंशे शूरापत्यगणनायाम्। महिष्यां जज्ञिरे शूराद्भोजायां पुरुषा दश। वसुदेवो महाबाहुः पूर्व्वमानकदुन्दुभिरित्युपक्रम्य देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः। अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः। श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गना इति मध्ये विधाय। पृथुकीर्त्तिः पृथा चैव श्रुतदेवा श्रुतश्रवाः राजाधिदेवी च तथा पञ्चैता वीरमातर इति पञ्चापि विगणय्य पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्। यस्यां स धर्म्मविद्राजा धर्म्माज्जज्ञे युधिष्ठिरइत्यादि। अत्र चक्र इति कर्त्तुरेव व्यापारश्रवणादस्याः कृत्रिमत्वम्।

पाद्मे भीमव्रते च। आसीत् सुनन्दिकः पूर्व्वं ब्राह्मणो वेदपारगः। तस्य सुन नयने धर्म्य वङ्गलोभिनी। तस्यापत्यं न सञ्जातं दृष्ट्वलं बन्ध्यभावतः न्दिका भार्य्या ब्रह्मन्

तेनान्यस्य सुता जाता सुशीला रूपसंयुता। ब्राह्मणस्य कुले जाता गृहीता पोषिता स्वयम्। तां च पुत्रीं गृहे तस्य ब्राह्मणी सा ह्यपालयत्। विवाहार्थन्तु विप्रस्य दत्ता सोमेश्वरस्य च। वेदोक्तविधिना तत्र विवाहमकरोत्तदित्यादि। अत्रापि स्वयं गृहीतेति श्रवणं कृत्रिमत्वे लिङ्गं। न च स्वयं पोषितेत्यन्वयः साधुः। ग्रहणपोषणयोः क्त्वाप्रत्ययाभिहितसमानकर्तृकत्वेनैव स्वयम्पोषणस्य सिद्धत्वात्। दत्तात्मिकायाः पुराणान्तरेषु मृग्यं॥

अपविद्धायां महाभारते आदिपर्व्वणि शाकुन्तले दुष्मन्तशकुन्तलासम्वादानुवादक एव वाक्यं। जनयामास स मुनिर्म्मेनकायां शकुन्तलां। प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीं। जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु। कृतकार्य्या ततस्तूर्णमगमच्छक्रसंसदम्। तं वने विजने गर्भं सिंहव्याघ्रसमाकुले। दृष्ट्वा शयानं शकुनाः समन्तात्पर्य्यवारयन्। नेमां हिंस्युर्व्वने बालां क्रव्यादा मांसगृद्धिनः। पर्य्यरक्षंस्तदा तत्र शकुन्ता मेनकात्मजाम्। उपस्प्रष्टुं गतस्त्वाहमपश्यं शयितामिमाम्। निर्ज्जनेपि वने रम्ये शकुन्तैः परिवारिताम्। आनयित्वा ततश्चैनां दुहितृत्वे निवेशयम्। शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते। क्रमेण ते त्रयोप्युक्ताः पितरो धर्म्मशासने। निर्ज्जने तु वने यस्माच्छकुन्तैः परिवारिता। शकुन्तलेति नामास्याः कृतञ्चापि ततो मया। एवं दुहितरं विद्धि मम विप्र शकुन्तलाम्॥

शकुन्तलोवाच। एतदाचष्ट पृष्टः सन् मम जन्म महर्षये। सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप। कण्वं हि पितरं मन्ये पितरं स्वमजानतीति। अत्रोत्सृष्टाग्रहणादपविद्धाविधिः स्पष्ट एव। तदेवं तत्तद्विध्यविनाभूतलिङ्गदर्शनैस्तत्तद्विधिसिद्धिः सुकरैवेत्यलम्पल्लवितेन।

अथ दत्तकाशौचनिर्णयः॥ तत्र जनककुले परस्परं नास्त्येव। गोत्ररिक्थे जनयितुर्न्न भजेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति मनुवचनात् अत्र च स्वधापिण्डशब्दौ अशौचादिसकलपितृकर्म्मोपलक्षणं पिण्डदानादिनिमित्तभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् प्रेतपिण्डदानादेस्तत्पूर्व्वाशौच

पूर्व्वकालत्वनियमात्॥ ततश्च पिण्डनिवृत्त्या चाशौचनिवृत्तिरर्थसिद्धैव असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्। प्रग्राहिणान्तु नैव स्यात् कर्त्तुः स्वस्ति तथापि च॥ यावदशौचमुदकं पिण्डमेकञ्च दद्युरित्यादि वाक्यपर्य्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः तस्माद्दत्तकतज्जनकादीनाञ्च परस्परं नाशौचादि॥ यत्तु वैजिकादपि सम्बन्धादनुरुन्ध्यादघं त्र्यहमिति तदपि व्यपैति ददतः स्वधेत्यनेनापादितम्। दत्तकातिरिक्तस्थले तस्य सावकाशत्वात्। किञ्च अशौचोदकदानादौ गोत्रसापिण्ड्ययोर्म्मिलितयोर्निमित्तत्वावगमात्। अन्यतरापायेन तन्निमित्तमशौचादि।

तथा च शङ्खलिखितौ। सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगमिति। प्रतिग्रहीतृपित्रादीनान्तु दत्तकादिमरणे त्रिरात्रमशौचं।

तदाह वृहस्पतिः। अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। मृतेष्वाप्लुत्य शुद्ध्यन्ति त्रिरात्रेण द्विजोत्तमाः। इदञ्च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्य्यात्वं पुत्त्रत्वञ्च तस्यैव।

त्रिपुरुषान्तर्वर्त्तिनां पितृसपिण्डानान्तु पृथगाह मरीचिः॥ सूतके मृतके चैव त्रिरात्रम्परपूर्व्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुरिति। यद्यपि दत्तकादीनामुत्पन्नानामेव स्वीकारात् परिग्रहीतुस्तदुत्पत्त्याशौचं न घटते तथापि तदपत्योत्पत्त्यशौचं पौनर्भवस्य तु स्वगृहोत्पत्त्याशौचं घटत एवेति सूतकनिर्द्देशः। इदमपि समानजातीयानामेव पुत्त्राणां॥

तथाच ब्रह्मपुराणम्। औरसं वर्ज्जयित्वा तु सर्व्ववर्णेषु सर्व्वदा। क्षेत्रजादिषु पुत्त्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चय इति। सर्व्वदा सर्व्वकालमुपनयनानन्तरमपि। अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पितेति॥ यद्यपि प्रतिग्रहीतृमरणे दत्तकस्य दशाहाशौचं न घटते सपिण्डसगोत्रत्वयोर्म्मिलितयोरभावादशौचविशेषश्चाहेत्यनेनोपलभ्यते। तथापि गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेता

हरि: समन्तचदशरात्रेण शुद्ध्यतीति मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्य्यकरण निमित्तदशाहाशौचमुक्तम्भवति अत्र गुरुशब्द आचार्य्यादिरूपे गुरुत्वमत्राप्यस्ति उपनयनादिकर्तृत्वात्। ततश्च दत्तकस्य प्रतिग्रहीतृक्रियाकरण एव दशरात्रा शौचं सिद्ध्यति। अन्यथा त्रिरात्रमेव पूर्व्वोक्तवचनात् एवं दत्तकस्य प्रतिग्रहीतु स्त्रिपुरुषान्तर्व्वर्त्तिसपिण्डमरणे एकाहः।एकाहस्तु सपिण्डानामिति पूर्व्वोक्तमरी चिवाक्यात्। सोदकसगोत्रयोश्मरणे स्नानमात्रम्। अन्याश्रितेषु दारेषु परपत्नी सुतेषु चेति पूर्व्वोक्त प्रजापतिवाक्यात्॥

अथ दत्तकपुत्रकर्तृकश्राद्धनिर्णयः॥ तथाच जातूकर्णः॥ प्रत्यब्दं पार्व्वणेनैव विधिना चेत्रजौरसौ। कुर्य्यातामितरे कुर्य्युरेकोद्दिष्टं सुतादशेति॥ प्रत्यब्दमिति सामान्योपादानेन मघादिश्राद्धप्राप्तावपि क्षयाहश्राद्धमेवात्र विवक्षितम्॥ पितु र्गतस्य देवत्वमौरसस्य त्रिपौरुषम्। सर्व्वत्रानेकगोत्रानामेकोद्दिष्टं क्षयेऽहनीति पराशरवाक्ये क्षयाहपदोपादानात्। नचात्राप्यनेकगोत्रपदं मातामहादिपरं तस्य पित्रौरसपदसमभिव्याहारेण औरसप्रतियोग्यनौरसपुत्रपरत्वस्यैवौचित्यात्। अन्यथा पितुः पुत्रेण क्षयेऽहनि त्रिपुरुषं कर्त्तव्यमित्येतावतैवार्थसिद्धौ और सपदोपादानानर्थक्यापातात्। नच मातामहादीनामपि क्षयाहे एकोद्दिष्टमेव भवतीति नियमोऽस्ति॥

तथाच मरीचिः॥ मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः। तेषान्तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनव इति अत्र त्रयाणां मातामहानां श्राद्धविधानात् पार्व्वणमवगम्यते। नच पितृवदित्यनेन मातामहानामपि पार्व्वणैकोद्दिष्टयो र्व्विकल्पः॥ तस्य मातामहश्राद्धनित्यताविधानपरत्वात् किञ्च कर्षूसमन्वितं मुक्ता तथाद्यं श्राद्धषोडशम्। प्रत्याब्दिकन्तु शेषेषु पिण्डाः स्युः षडिति स्थितिरित्यत्रापि प्रत्याब्दिकशब्दस्यापि प्रत्यब्दशब्दवन्मघादिश्राद्धपरत्वं कुतो न स्यात् इष्टापत्ति रिति चेत्। न मघादिष्वपि दत्तकादीनामेकोद्दिष्टापत्तेः न चैतत्कस्यापीष्टं प्रत्याब्दिकशब्देन श्राद्धमात्रसंग्रहे शेषपदाभिधेयश्राद्धान्तराभावेन पर्य्युदा

सासम्भवात् । तस्मादौरसेन त्वयाद्दे मातापित्रोः पार्व्वणमेव कार्य्यं इतरैर्द्दत्त कादिभिरेकोद्दिष्टमेव। इत्येव व्यवस्था साधीयसीत्यलम्विस्तरेण ॥

अथ दत्तकविभागः । तत्र वशिष्ठः॥ तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति । तदभावे तु सर्व्वहरः॥

इतिश्रीधर्म्माधिकारिरामपण्डितात्मजश्रीनन्दपण्डितविरचिता दत्तकमीमांसा समाप्ता॥

---

# ॥ दत्तकचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥ चन्द्रिकाऽनुक्तसञ्जातसंशयध्वान्तन्द्रिका। चन्द्रिकाला नुभावेन कृता दत्तकचन्द्रिका ॥ मन्वादिवाक्यविहतेषु विवादमार्गेष्वष्टादश स्वपि मया स्मृतिचन्द्रिकायाम्। कल्युक्तदत्तकविधिर्न्न विवेचितो यः सर्व्वः सचात्र विततो विहतो विशेषात् ॥

॥ तत्राह मनुः ॥ अपुत्त्रेण सुतः कार्य्यो यादृक्तादृक् प्रयत्नतः। पिण्डोदक क्रियाहेतोर्न्नामसङ्कीर्त्तनाय च।

अत्रिश्च। अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिस्सदा। पिण्डोदकक्रियाहेतोर्य स्मात्तस्मात्प्रयत्नतः ॥ अपुत्त्रेण अजातपुत्त्रेण मृतपुत्त्रेण वा। अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य चेति शौनकसम्वादात्। तेन पुत्त्रोत्पत्त्या ज्येष्ठेन जातमा त्रेण पुत्त्रीभवति मानवः। पितृणामनृणश्चैव स तस्मात्सर्व्वमर्हतीति मनुवच नावगतत्रृणपरीहारेपि तत्पुत्त्रमरणे पिण्डोदकाद्यर्थं पुनः पुत्त्रकरणमावश्य कम् ॥ अत्र पुत्त्रपदं पौत्त्रप्रपौत्त्रयोरप्युपलक्षणम्। तयोरपि पिण्डदातृत्ववंशकर त्वाविशेषात्। अन्यथा सत्यपि पौत्त्रे मृतपुत्त्रस्य निर्न्निमित्तपुत्त्रपरिग्रहापत्ति रतः पुत्त्रपौत्त्र प्रपौत्त्र रहितस्यैव पुत्त्रीकरणमवगम्यते अपुत्त्रेणेत्यत्र पुंस्त्वै कत्वयोर्व्विधेयविशेषणतया विवक्षितत्वम्। तेन द्वाभ्यांत्रिभिर्व्वा नैकः प्रति ग्राह्यइति तु न देश्यं। द्व्यामुष्यायणस्य द्वाभ्यां परिग्रहस्य वक्ष्यमाणत्वात्। स्त्रियाश्च भर्त्तुरनुज्ञया तदधिकारात्।

यथाह वशिष्ठः ॥ न स्त्री पुत्त्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुरिति। प्रतिनिधिरिति स च क्षेत्रजादिरेकादशविधः।

यथामनुः ॥ क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्त्रप्रतिनिधी नाहुः क्रियालोपान्मनीषिणः।

वृहस्पतिः ॥ पुत्त्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्व्वशः। सन्तानकारणन्तेषामौरसःपुत्त्रिका तथा। आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतं। तथैकादशपुत्त्रास्तु पुत्त्रिकौरसयोर्विना। तत्रापि कलौ न सर्व्वेषामभ्यनुज्ञानं। अनेकधा कृताः पुत्त्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैरिति वचनात्॥ दत्तौरसेतरेषान्तु पुत्त्रत्वेन परिग्रह इत्याद्यभिधाय इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिण इति दत्तकेतरप्रतिनिधिनिषेधादतो दत्तकविधिर्व्विविच्यते॥

तत्र शौनकः। ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्त्रसंग्रहः। तदभावेऽसपिण्डेवा अन्यत्र तु न कारयेत्॥ सपिण्डेष्विति सामान्यश्रवणात्समानासमानगोत्रेष्वित्यर्थः।

तथाच सपिण्डाभावेऽसपिण्डः सगोत्रस्तदभावे भिन्नगोत्रोपि ग्राह्य इत्याह शाकलः। सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्त्रको द्विजो यस्मात्पुत्त्रत्वेपरिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजं। दौहित्रं भागिनेयञ्च मातृस्वसृसुतं विना इति। अन्यत्रतु न कारयेदिति ब्राह्मणातिरिक्तः॥ क्षत्त्रियादिरसमानजातीयो दत्तको व्यावर्त्त्यते।

यदाह मनुः॥ माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि। सदृशम्प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः॥ आपदि पुत्त्रप्रतिग्रहीतुरपुत्त्रत्वे सदृशं सजातीयं॥ यत्तु शदृशं न जातितः किन्तु कुलानुरूपैर्गुणैस्तेन क्षत्त्रियादिरपि ब्राह्मणस्यपुत्त्रो युज्यते इति मेधातिथिव्याख्यानं॥ तत्रायमभिसन्धिः औरसत्वे क्षत्त्रियादेरसमानजातीयतया पिण्डोदकाद्यनर्हत्वेपि नामसङ्कीर्त्तनादिप्रयोजनकतया पुत्त्रत्वमुत्पद्यत एव शास्त्रीयत्वात्। परन्त्वल्पोपकारकतया ग्रासाच्छादनमात्रभागित्वं यदाह कात्यायनः॥ असवर्णास्तु ग्रासाच्छादनभागिन इति।

तथा शौनकः ॥ यदि स्यादन्यजातीयो गृहीतोपि सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तत्॥ याज्ञवल्क्येनापि सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते नतु विजातीयस्य पुत्रत्वं निषिद्धं॥

व्यक्तमाह वृद्धयाज्ञवल्क्यः॥ सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक्। तदभावे विजातीयो वंशमात्रकरः स्मृतः। ग्रासाच्छादनमात्रन्तु स लभेत तद्धनाद्धनी इति। वस्तुतस्तु मनुवचने सदृशपदस्य सजातीयार्थकतैव युक्ता परत्र तादृशदत्तकस्य विभागदर्शनादसवर्णस्य च विभागासम्भवात्। दौहित्रं भागिनेयञ्चेति दौहित्रभागिनेयनिषेधः शूद्रातिरिक्तविषयः।

तथाच शौनकः। क्षत्त्रियाणां स्वजातौ च गुरुगोत्रसमेऽपि वा। वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु॥ सर्व्वेषामेव वर्णानां जातिष्वेव नचान्यतः। दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः॥ ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्। गुरुगोत्रसमेऽपि वेति। क्षत्रियाणां प्रातिस्विकगोत्राभावात् गुरुगोत्रनिर्देशः। पौरोहित्यान् राजन्यविशां प्रवृणीतेति सूत्रेण तस्य पुरोहितगोत्रभागित्वोक्तेः। जातिष्वेव नचान्यत इति नियमः सजातीयसम्भवे विजातीयनिषेधार्थः अन्यथा प्रागुक्तकात्यायनविरोधः स्यात्।

तत्रापि सन्निहितसपिण्डेषु सति भ्रातृसुते स एव पुत्रीकार्य्यः इत्याह मनुः॥ सर्व्वेषामेकजातानामेकश्चेत्पुत्त्रवान् भवेत्। सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीत्॥

बृहस्पतिः॥ यद्येकजाता बहवो भ्रातरश्च सहोदराः। एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणः स्मृता इति। अत्र वचनद्वयेपि भ्रातृसुते च पुत्त्रप्रतिनिधितया कथञ्चित्सम्भवत्यन्यो न प्रतिनिधिः कार्य्य इत्यवगम्यते। न चापत्यमुत्पादयितव्यमिति नित्योह्ययं विधिः स यथाकथञ्चित्पालनीयस्तत्र भ्रातृत्वे पुत्त्रातिदेशेन तत्फलस्य पिण्डोदकादेरलौकतापरीहारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्तिरत एवाकृतस्यैव भ्रातृपुत्त्रस्य पुत्त्रत्वं॥

अपुत्त्रस्य पितृव्यस्य तत्पुत्त्रो भ्रातृजोभवेत्। स एव तस्य कुर्व्वीत श्राद्धमपि

ण्डोदकक्रियामिति वृद्धपराशरस्मरणात्। तस्मिन्सति तु न दत्तकाद्युपादा
नमिति वाच्यं भ्रातृव्यस्य पुत्त्रातिदेशेनालोकतापरीहारादिसाधकत्वेपि नाम
संकीर्त्तनोचितवंशकरत्वानुपपत्त्या तदर्थं तदुपादानस्यावश्यकत्वात्। किञ्च इदं
हि वचनद्वयं सति भ्रातृपुत्त्रे न दत्तकाद्युपादाननिषेधकं परन्तु श्राद्धादिकर्तृ
त्वरूपपुत्त्रधर्म्मातिदेशकं अन्यथा सत्यपि भ्रातृपुत्त्रे क्षेत्रजपुत्त्रोत्पादनविधिविरो
धापत्तेः। अकृता वा कृता वापि यं विन्देत्सदृशात् सुतं। पौत्त्री मातामहस्तेन
दद्यात्पिण्डं हरेद्धनमिति वचने दौहित्रेपि पौत्त्रातिदेशसत्वात् दौहित्रस
त्वेपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च। ननु सत्यपि भ्रातृपुत्त्रे दत्त
काद्युपादानस्य शास्त्रीयत्वे बह्वीनामेकपत्नीनामेष एव विधिः स्मृत इति वृद्ध
स्मृतिवचने सर्व्वासामेकपत्नीनामेका चेत्पुत्त्रिणी भवेत् सर्व्वास्तास्तेन पुत्त्रेण
प्राह पुत्त्रवतीर्म्मनुरिति मनुवचने च सपत्नीपुत्त्रे पुत्त्रधर्म्मातिदेशेन सत्यपि
तस्मिन्दत्तकाद्युपादानमस्त्विति चेन्न यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्या
मिक्षा भवति वाजिभ्यो वाजिनमित्यत्रामिक्षार्थं प्रवृत्तस्योद्देश्यीभूतामिक्षापचा
रे आमिक्षा पुरुषम्प्रवर्त्तयति नतु वाजिनमनुद्देश्यत्वेनाप्रयोजकत्वात्। यथा
वा पितुः क्षयाहे पित्रादित्रिकस्य पार्व्वणे कृते मातामहादिश्राद्धाय न पुनः
पार्व्वणारम्भः तस्य पितृश्राद्धाधीनप्रवृत्तेः। तथात्रापि भर्त्तुरनुज्ञयास्त्रेण तत्पु
त्रोपादानाय प्रवृत्तायास्तत्पुत्त्राभाव एव तदुपादानं नतु तत्पुत्त्रानपचारेपि
स्वपुत्त्रापचारे तदुपादानं तत्प्रवृत्तेरप्रयोजकत्वात्। तत्रालोकतापरीहारोऽस्या
न स्यादित्यपेक्षायां मनुवृद्धस्मृतिवचनद्वयं सपत्नीपुत्त्रे पुत्त्रातिदेशेनालोकता
परीहारश्राद्धोपपादकं। भर्त्तृवंशमन्तरेण चास्या वंशान्तरासम्भवेन तस्यैव स्व
वंशकरत्वं चेत्यतः समस्तस्यापि पुत्त्रप्रयोजनस्य सम्भवेन सति सपत्नीपुत्त्रे न दत्त
काद्युपादानं। भ्रातृपुत्त्रस्य तु वंशकरत्वाभावेन सत्यपि तस्मिन्नुपादेयत्वं दत्त
कादेः इत्येतावानपरं विशेषः। ननु सति भ्रातृसुते तस्यैव पुत्त्रीकरणावश्य
म्भावे यत्रैक एव भ्रातृपुत्त्रस्तत्रैव तदसम्भवः। नत्वेकं पुत्त्रं दद्यात्प्रतिगृह्णी
याद्वा स हि सन्तानाय पूर्व्वेषामिति वसिष्ठस्मरणादिति चेन्न एतस्य द्व्यामुष्यायणे

तरविषये सावकाशत्वात् द्व्यामुष्यायणे च हेतुवन्निगददर्शितसन्ततिविच्छेदाभावात्। वेतालस्य च भैरवपुत्त्र पुत्त्रीकरणे पौराणिक लिङ्गदर्शनाच्च।

यथा। ततः कदाचिदुर्व्वश्यां भैरवो मैथुनं गतः। तस्यां स जनयामास सुवेशं नाम पुत्त्रकं। तमेव चक्रे तनयं वेतालोपि स्वकं सुतं। ततस्तौ तेन पुत्त्रेण स्वर्ग्यां गतिमवापतुरिति॥

केन पुत्त्रो देय इत्याह शौनकः॥ नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं कदाचन। बहुपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नत इति। द्विपुत्त्रस्यापि पुत्त्रदानेऽपरपुत्त्रनाशे वंशविच्छेदमाशङ्क्याह। बहुपुत्त्रेणेति। स्त्रियास्तु जीवति भर्त्तरि तदनुमतौ प्रोषिते मृते वा तदनुज्ञां विनापि यथावशिष्ठः नस्त्रीपुत्त्रन्दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुरिति। अनुमतिश्चाप्रतिषेधेपि भवति अप्रतिषिद्धं परमतमनुमतं भवतीति न्यायात्॥

निरपेक्षदानमाह याज्ञवल्क्यः॥ दद्यान्माता पिता वा यं स पुत्त्रो दत्तको भवेत्। तथा। मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेणवेति।

अथ पुत्त्रपरिग्रहविधिमाह शौनकः॥ शौनकोऽहं प्रवक्ष्यामि पुत्त्रसंग्रहमुत्तमं। अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य च। संग्रहं संग्रहणविधिः। उपोष्य ग्रहणात्पूर्व्वदिने कृतोपवासः।

वृद्धगौतमः॥ वाससी कुण्डले दत्वा उष्णीषञ्चाङ्गुलीयकं। आचार्य्यन्धर्मसंयुक्तं वैष्णवं वेदपारगं। मधुपर्केण सम्पूज्य राजानञ्च द्विजान् शुचीन्॥ राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनं। बन्धूनाहूय सर्व्वांस्तु ग्रामस्वामिनमेव चेति स्मरणात्। द्विजानिति बहुत्वं त्रित्वपर्य्यवसितं कपिञ्जलन्यायात्। द्विजानां पूजनं याचनार्थं वर्हिः कुशमयञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः॥ बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः। अन्याधानादिकं तत्र कृत्वाज्यौत्पवनान्तकं॥ दातुः समक्षं गत्वा च पुत्त्रं देहीति याचयेत्। दाने समर्थो दातास्मै यो यज्ञेनेति पञ्चभिः॥ दद्यादिति शेषः। बन्धूनात्ममातृपितृबन्धून् ज्ञातीन् सपिण्डान्। तदाकार्ने दृष्टार्थम् बन्धूनाहृताम्।

ब्राह्मणान् पूर्व्वाहूतान् चकारात् आहूतान् ज्ञातींश्च सम्भोज्येत्यर्थः। तथा देवस्यत्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशु मूर्द्धनि। वस्त्रादिभिरलङ्कृत्य पुत्त्रच्छायावहं सुतं॥ पुत्त्रच्छाया पुत्त्रसादृश्यं॥ नियोगादिना स्वयमुत्पादनयोग्यत्वमिति यावत्। तथा नृत्यगीतैश्च वाद्यैश्च स्वस्ति शब्दैश्च संयुतं। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः॥ यस्त्वाहृते त्यृचा चैव तुभ्यमग्नेत्यृचैकया॥ सोमो दददित्येताभिः प्रत्यृचं पञ्चभिस्तथेति॥

वृद्धगौतमः॥ पायसं तत्र साज्यञ्च शतमष्टञ्च होमयेत्। प्रजापते नत्व देतामित्युद्दिश्य प्रजापतिमिति॥

वशिष्ठः। पुत्त्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसन्निकृष्टमेव गृह्णीयात्सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन बहूंस्त्रायते इति। निवेशनं गृहं। सन्देहे इति दूरावस्थितबान्धवस्यात्यन्तदेशभाषाविप्रकर्षादिना कुलशीलादि सन्देहो भवत्येव तथात्वे तन्निर्णयपर्य्यन्तं न व्यवहरेत्तत्र हेतुरेकेनेति। बहून् पित्रादीन्। एतदन्यतरविधिरावश्यकः॥

ततश्च शौनकः॥ दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः। नृपो राज्यार्द्ध मेवाथ वैश्यो वित्तशतत्रयं। शूद्रः सर्व्वस्वमेवापि अशक्तश्चेद्यथाबलं। राज्यार्द्धमर्द्धराज्योत्पन्नमेकवर्षीयद्रव्यं। प्रदद्यादर्द्धराज्योत्थमेकवर्षाहृतन्धनमिति वृद्धगौतमस्मरणात्। उत्तममध्यमाधमभेदेन वित्तानां सुवर्णरजतताम्राणामिति ज्ञेयम्। शतत्रयं नाणकानां सौवर्णमथ राजतं। प्रदद्यात्ताम्रमथ वा उत्तमादिव्यवस्थयेति वृद्धगौतमस्मरणात्॥ सर्व्वस्वमेकवर्षार्जितधनमिति यावत्॥ तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः॥

अथ पुत्त्रपरिग्रहविधिं व्याख्यास्यामः॥ प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं आचार्य्यञ्च वेदपारगं कुशमयं बर्हिःपर्णमयमिध्ममित्यथ बन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणवा गावस्येन उपविश्य पुण्याहं स्वस्तिमृद्धिमिति वाचयित्वा यद्देवयजनोल्लेख

प्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत् ददानीतीतर आह तम्परिगृह्णाति धर्माय त्वा परिगृह्णामि सन्तत्यै त्वापरिगृह्णामि इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधानं प्रभृत्यग्निमुखं कृत्वा त्यक्त्वा जुहोति यस्त्वाहृदाकोविशामन्यमान इति पुरोनुवाक्यमनूद्य यस्मैत्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृतिसिद्धमा धेनुवरप्रदानदक्षिणां ददात्येतेच वाससी एते कुण्डले एतच्चाङ्गुरीयकं य एवं त्वौरस उत्पद्यते तुरीयभागे सम्भवतीति आह स्म बौधायन इति ॥ एवमुक्तविध्यभावे परिगृहीतस्य तु विवाहोचितधनमात्रभागित्वं नत्वंशभागित्वमिति वक्ष्यते ॥

तथा मनुः ॥ गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति। एतेन दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते॥ तथा च गोत्रादिनिवृत्तेरेव दर्शनात्। संस्कुर्व्वीत स्वसुतान् पितेति स्मरणाद्ग्रहणानन्तर सम्भाव्यमाना एव दत्तकस्य संस्काराः प्रतिग्रहीत्रा कार्य्या न पुनर्जनकेन कृतपूर्व्वा अपि निवर्त्तनीयाः। एवमेनः शमं याति वीजगर्भसमुद्भवमिति चित्रकर्म्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्व्विधिपूर्व्वकैरिति वचनबोधितस्य नत्तत्क्रियातो वीजादिदोषनाशस्य ब्राह्मण्याधानस्य च जातत्वेन तदा कृत्ते प्रमाणाभावाच्च ॥ अन्यथा अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयं। पिता कुर्य्यात्तदन्यो वा तस्याभावेपि तत्क्रमादित्यनेन पुंसवनसीमन्तोन्नयनयोरपि करणापत्तेः। तच्चायुक्तं असाम्प्रदायिकत्वात्। किञ्च ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात्तत्पूर्व्वभाविषु संस्कारेषु प्रतिग्रहीतुरनधिकार एवातिकालाभावात् ॥ यदि च तत्पूर्व्वभाविनोपि संस्कारा जनकेन न कृतास्तदा वीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः। एवञ्च उपनयनमात्रकरणेपि प्रतिग्रहीतुर्द्दत्तकपुत्रसिद्धिः॥ अन्यशाखोद्भवोदत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्त

विधिना स स्वशाखभागिति वशिष्ठस्मरणात् । एतच्चाष्टमाब्दरूपतन्मुख्यकाला भ्यन्तरवर्त्तिपरिग्रहे बोध्यं अन्यथा मुख्यकालेऽधिकारयोग्यत्वाभावे गौणकाले ऽनधिकारान्न तत्सिद्धिरिति ॥ अत्र च जनकप्रतिग्रहीत्रोरुभयोरपि पुत्राभि सन्धाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वं विशेषो वक्ष्यते ॥ यत्तु पुराणनाम्ना पठन्ति ॥ पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते । आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥ चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्तेस्युरन्यथा दास उच्यते । यदि स्यात् कृतसंस्कारो यदि वा तीतशैशवः । ग्रहणे पञ्चमाद्वर्षात्पुत्रेष्टिं प्रथमं चरेदिति तदमूलं समूलत्वेपि यज्जनकगोत्रेण चूडान्तसंस्कारसंस्कृतस्य न ग्रहीतुःपुत्रत्वं ग्रहीत्रैवचूडादि सं स्कारकरणे तत् । यदि च कृतचुडोऽतीतपञ्चवर्षो वा ग्राह्यो भवति न तदास्य पुत्रत्वं सम्भ तीति च विद्वांसन्ति तन्न अनुवादापत्तेः । पञ्चवर्षाभ्यन्तरगृहीतस्या प्युपनयनात्पूर्व्वं सकलशिष्टानुमोदितपुत्रत्वव्यवहारानुपपत्तेः। तदानीं ग्रहीतरि मृते तच्छ्राद्धानधिकारापत्तेश्च । किन्त्वयं वचनार्थः । जनकगोत्रेण कृतचूडान्त संस्कारस्य पुत्रत्वं निषिद्ध्य प्रतिग्रहीत्रा पुनश्चूडादिकरणे तत्प्रतिप्रसूतं । ततश्च कृतसंस्कारस्यातीतपञ्चवर्षस्य च ग्रहीत्रा चूडादिकरणात्पूर्व्वं दासत्वाक्षेपात् चूडादिकरणानन्तरं पुत्रत्वं लब्धं । अकृतसंस्कारस्यानतीतपञ्चवर्षस्य तु परिग्रहमात्रादेव तत्प्राप्तं तच्च विततं ॥ अथ वा जनकेन चूडान्तं संस्कृतोपि पुत्रो न पुत्र इत्यपुत्रातिदिष्टे यतोऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः । तथा चैकस्य पुत्रपदस्य चकारस्य च वैयर्थ्यदूषणमपि परिहृतं एवञ्च चूडाद्या इत्यतद्गुणसम्विज्ञानवहुव्रीहिणा द्विजातीनामुपनयनलाभः । शूद्रस्य तु विवा हादिलाभः । अन्यशाखाङ्गीवादत्तः पुत्रस्यैवोपनायितः । स्वगोत्रेण स्वशाखोक्त विधिना स स्वशाखभागिति प्रागुक्तैकवाक्यत्वात् ॥ पञ्चमाद्वर्षादिति ब्रह्मवर्च स्फलार्थिविप्राभिप्रायं ॥ ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे इति मनुवचने तत्कामस्य पञ्चमवर्षस्यैव उपनयनमुख्यकालत्वेन तदेकमूलत्वात्तदनर्थिनस्त्वष्टमा द्वादिति। चनियादेरप्युपनयनतत्तन्मुख्यकालादरः मुख्यकालेपि सिद्धाधिकार

योग्यत्वस्यैव गौणकालेऽपि संस्काराधिकारादित्युक्तप्रायम् ॥ चूडायां गौणका लादरस्तु वचनबलादेव। पुत्त्रेष्टिमिति वर्षत्रयस्यैवाधिकारात्तेन पुत्त्रेष्टिपूर्व्वं कचूडादिभिः पुत्त्रत्वं सम्पाद्यं। शूद्रेण तु तदापि संस्कारमात्रादेवेति सर्व्वमन वद्यं। एवञ्च सर्व्वेषामेव प्राचां कालविशेषमनन्तर्भाव्यैव पुत्त्रपरिग्रहविधानमुपप द्यते उक्तार्थस्य स्वतः सिद्धत्वात्। अथैवमुक्तवचनपरव्याख्याने कृतचूडस्य दत्त कस्य जनकमात्रपुत्त्रत्वं निषिध्यान्यतस्य पुत्त्रत्वं यातीत्यत्र चकारेण जनकप्रति ग्रहीतृसाधारण्यं लब्धं उभयोरेव संस्कारकत्वात्। तच्च तदुभयोरावयोरयं पुत्त्र इत्यभिसन्धाने सति बोध्यं अयमेव द्व्यामुष्यायणो नाम द्विपिता द्विगोत्रश्च। ननु क्षैत्रिकस्यैव द्विपितृकत्वं दृश्यते।

तथा हारीतः॥ जीवति क्षेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणमगुप्तबी जत्वात्। जीवत्यपि क्रियाभ्युपगमाद्द्विपितृको भवतीत्याह मनुः। क्रियाभ्युप गमात्त्वेवं बीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षैत्रिक एव चेति॥ अपुत्त्रबीजिक्षैत्रिकयोर्मम क्षेत्रे तव बीजं यदपत्यं तदावयोरित्ययं क्रिया भ्युपगमः॥ तथा अपुत्त्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसा वृ[illegible] पिण्डदाता च धर्म्मत इति॥ दत्तकस्य तु तदद्दृष्टपरं प्रत्युत गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुत इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमे वास्तीति चेन्न दत्तकादिष्वपि सर्व्वेषामेकधर्म्मिणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृता इति बौधायनदर्शनेन क्षेत्रज धर्म्म लाभात्॥ द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनुद्दिश्य एकपिण्डे वा द्वावनुकी र्त्तयेत्प्रतिग्रहीतारं चोत्पादयितारं आतृतीयात्पुरुषादिति शाङ्खायनप्रवरा ध्याये सामान्यतो दर्शनाच्च दत्तकस्यापि द्विपितृकत्वसिद्धिः॥ अतएव सत्या षाढेऽपि। नित्यानां द्व्यामुष्यायणानां द्वयोरिति सूत्रेण नित्यद्व्यामुष्याय णानां क्षेत्रजानां सप्रवरगोत्रद्वयसम्बन्धमुक्त्वा दत्तकादीनां द्व्यामुष्यायण वदिति सूत्रेण तद्धर्म्ममतिदिशति॥ विवृतञ्चैतद्भाष्यकारैः। नित्यद्व्यामुष्या यणप्रसङ्गेनानित्यानाह दत्तकादीनामिति। तावदेव नोत्तरसन्ततौ प्रथमेनैव

संस्कारः परिग्रहीत्रा चेत्तदा उत्तरस्य पूर्व्वत्वात्तेनैव उत्तरत्वेति ॥ एतद्व्याख्यार्थस्तु क्षेत्रजवत् उभयोरपि सत्त्वौ दत्तकस्योभयगोत्रभागित्वं । अन्यथा जनकेनैव सर्व्वसंस्कारकरणे तु जनकगोत्रभागित्वं न ग्रहीतृगोत्रभागित्वं ॥ ग्रहीत्रा संस्कारकरणे तु उत्तरस्य ग्रहीतुः पूर्व्वत्वात्प्राधान्यत्वात्तेनैव उत्तरसन्ततेर्गोत्रमिति ।

तथा पैठीनसिः ॥ अथ दत्तकक्रीतकृत्रिमपुत्त्रिकापुत्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसङ्कृतकुलीना द्व्यामुष्यायणा भवन्तीति ॥ आर्षेण स्वश्रुतेन परिग्रहेण जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणा भवन्तीत्यर्थः ॥ व्यक्तमुक्तं द्व्यामुष्यायणका येस्युर्द्दत्तक्रीतादयः सुताः । गोत्रद्वयेप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति ॥ नच दत्तकस्य द्व्यामुष्यायणत्वं न घटते । जनकस्यापि तत्र स्वत्वान्यायेन माता पिता वा तद्यातामिति दानविध्यनुपपत्तेरिति वाच्यम् । सामान्यं सर्व्वभूतेभ्यो मयोत्सृष्टमिदञ्जलम् । रमन्तु सर्व्वभूतानि स्नानपानावगाहनैरित्यादौ स्वमात्रस्वत्वनाशकसर्व्वभूतोद्देश्यकत्यागादेव नद्यादिवत्साधारणीकृते जले स्वामिनोपि उद्देश्यतया स्वत्ववत् अत्रापि तादृशाभिसन्धिपूर्व्वकादेव दानात्तादृशदत्तकस्य साधारण्यसिद्धिरित्यास्तां विस्तरः ॥

अथ दत्तककर्त्तृकश्राद्धनिर्णयः ॥ तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्व्वगृहीतत्वेपि सत्यौरसे नाधिकारः ॥ औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते । इति देवलेन ज्येष्ठत्वप्रतिषेधात् । पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः पर इति याज्ञवल्क्यवचनाच्च । अन्यत्र सर्व्वत्रौरसवत् ॥

क्षयाहे तु विशेषो यथा जातूकर्णः ॥ औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश । इतरे दशदत्तकादयः ॥ तथा पराशरः ॥ पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषं । सर्व्वत्रानेकगोत्राणामेकोद्दिष्टं चैव हि नीति । अनेकगोत्राणां द्विगोत्राणाम् । औरसक्षेत्रजयोरपि साग्न्योरेव पार्व्वणाधिकारः पार्व्वणेन विधानेन देयमग्निमता सदेति जाबालमत्स्यपुराणैकवाक्यत्वात् । औरसक्षेत्रजव्यतिरिक्तानान्तु साग्निनिरग्नि साधारणानामेकोद्दिष्ट

मिति सिद्धं। द्व्यामुष्यायणस्येतिकर्त्तव्यतायां विशेषमाह सांख्यायनसूत्रं। पिण्डान् यथावनेजनं निधाय उभावेकस्मिन् पिण्डे पितृभेदे इति ॥ पितृभेदे एकस्मिन् पिण्डे उभौ जनकग्रहीतारौ कीर्त्तयेदिति शेषः ॥ प्रवराध्याये पितृत्वेन चैकका ख्यंजातास्ते परिग्रहीतुरेव भवन्ति अथ यद्येषां भार्य्यास्वपत्यं नस्यात्तदा रिक्थं हरेयुः पिण्डं तेभ्यः त्रैपुरुषिकं दद्युः यद्यपि स्यादुभाभ्यामेव दद्युरित्याचा र्य्यवचनं द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनूद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तये त्प्रतिग्रहीतारं चोत्पादयितारं आतृतीयात्पुरुषादिति। ग्रहीतुः क्रिया निय माभावे पुत्रान्तराभावे च तस्यैव क्रियानियमेऽपत्यसद्भावे च द्विपितृकत्वमि त्यर्थः अत्र श्राद्धभेदाभेदयोर्विकल्पः ॥ नचेदं क्षेत्रजविषयं सत्याषाढेन दत्त कादीनां द्व्यामुष्यायणवदिति सूत्रेण दत्तकेपि तद्धर्मातिदेशात् ॥

तथा हारीतः ॥ तेषामुत्पादयितुः प्रथमं प्रवरो भवति द्वौ द्वौ पिण्डौ निर्वपेत् एकपिण्डे वा द्वावनुकीर्त्तयेद्द्वितीये पुत्रः तृतीये पौत्रः लेपिनस्त्रीन् वाचयाण आसप्तमादित्येके इति ॥ तेषां पितॄणां मध्ये वीजिनः प्रथममार्षेयं क्षेत्रिणो द्वितीय मिति द्विप्रवरता । एकपिण्डे वेत्यत्र वीप्साध्याहारः। यदि द्विपिता स्यादेकैकस्मिन्नेव द्वौ द्वावुलपत्तयेदित्यापस्तम्बवचनात् द्वितीये पिता महपिण्डे द्व्यामुष्यायणस्य पुत्रः तृतीयेप्रपितामहपिण्डे द्व्यामुष्यायणस्य पौत्र इति ॥ यदि तु ग्रहीता प्रथमं मृतः तदा तस्मै दद्यात् अथ यदि जनकस्तदा जनकाय यद्युभौ तदादौ जनकाय पश्चाद्ग्रहीत्रे दद्यादित्याह ॥

मरीचिः ॥ सगोत्रादन्यगोत्राद्वा योभवेद्विधवासुतः। पिण्डं श्राद्धविधानञ्च क्षेत्रिणे प्राक् प्रदापयेत्॥ वीजिने तु ततः पश्चात्क्षेत्री जीवति चेत्कचित्। वीजिने दद्युरादौ तु मृते पश्चात्प्रदीयते। उभौ यदि मृतौ स्यातां वीजिन्यादौ ततो ददेत्। क्षेत्रिण्यादौ न दत्तं स्याद्वीजिने नोपतिष्ठते इति। एते नैकतरोप रतावपि द्विपितृकस्य पार्व्वणं दर्शितम् ॥ तथा तुल्यन्यायेन मातृभेदेऽपि द्व्यामु ष्यायणदत्तकस्य पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमित्यनेन प्राप्तमाता महश्राद्धे जननीपितॄणाम्प्रथमन्निर्देशस्ततः प्रतिग्रहीत्री या माता तत्पितॄणां।

शुद्धदत्तकस्य तु प्रतिग्रहीत्र्या एव मातुः पित्रादि पिण्डदानं ॥ तस्य तन्मात्र स्वधाकरत्वादिति ॥ एवञ्च सद्विसन्तानाय पूर्व्वेषामिति हेतुवन्निगदस्वरसा न्नैकं पुत्त्रं दद्यादिति निषेधो द्व्यामुष्यायणातिरिक्तविषयः सन्तानविच्छेदाभा वादित्युक्तमेव ॥

अथास्य सापिण्ड्यम् । जनककुलेऽवयवान्वयेन प्रतिग्रहीतृकुले च पिण्डान्वयेन त्रिपौरुषं यदाह कार्ष्णाजिनिः । यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः । प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिस्सह । द्वाभ्यां सहाथ तत्पुत्त्राः पौत्त्रास्त्वे केनतत्समं । चतुर्थे पुरुषे च्छेदं तस्मादेषा त्रिपौरुषीति । अस्यार्थः दत्तकादयः पुत्त्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणां औरसत्वे दत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड्वा तावद्भिः सह तेषां योजनं सपिण्डनङ्कुर्य्युः । तत्र प्रतिग्रहीत्रादीनामौरसत्वे तत्पितृपितामहप्रपितामहास्त्रयः । दत्तकत्वे तत् प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः द्व्यामुष्यायणत्वे तज्जनकाद्यास्त्रयः तत्प्रतिग्रहीत्रादयस्त्रय इति षट् । एवञ्च दत्तकस्य स्वकर्तृके पार्व्वणे येषां देव तात्वं स्वपुत्त्रकर्तृके सपिण्डीकरणेपि तेषामेव तथात्वमिति ज्ञापितम् । दत्तकस्य पुत्त्रास्तु दत्तकसपिण्डीकरणं तत्प्रतिग्रहीत्रा तत्पितृणान्त्रयाणां मध्ये द्वाभ्याञ्च सह कुर्य्युः ॥ एवञ्च दत्तकस्य पौत्त्रा दत्तकप्रतिग्रहीतृभ्यां ग्रहीतुः पितॄणां त्रयाणां मध्ये एकेन ग्रहीतुः पित्रेति यावत्तेन च समं सह तत्स्वपितृसपि ण्डनं कुर्य्युः । चतुर्थपुरुषेच्छेदमिति । यो यदा यत्सपिण्डीकरोति स तत्पित्रा दिभिस्त्रिभिरेव करोतीति चतुर्थे विरामः सिद्ध एवेति तदारम्भः सिद्धे सत्या रम्भो नियमाय इति न्यायेन लेपिनां लेपनिरासेन सापिण्ड्यव्यवच्छेदार्थः । मदेवाह तस्मादेषेति एषा सपिण्डता ॥

तथा च लेप भाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदस्सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति मत्स्यपुराणोक्तसाप्तपौरुष सापिण्ड्यस्य सामान्यशा स्त्रेण विशेषेण बाध एव ॥

अतएव हारीतेन । लेपिनस्त्रीन्वा पञ्चाणः श्राप्तमादित्येके । इति पक्षान्तर

मुपन्यस्तं सकुल्येति तदेव संगृह्णान्यत्रोक्तं। दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषं। जनकस्य कुले तद्वद्धीतुरिति धारणेति यदिदमुभयत्र त्रिपुरुष सापिण्ड्याभिधानन्तत् द्व्यामुष्यायणाभिप्रायेण तस्य त्रिकद्वयेन सपिण्डता भिधानात्। शुद्धदत्तकस्य तु गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः सुतः। गोत्र रिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति प्रागुक्तमनुवचने पिण्डनिवृत्तिदर्शना त्प्रतिग्रहीतृकुल एव सापिण्ड्यमिति॥

यत्तु वृद्धगौतमीयम्। स्वगोत्रेषु कृतायेस्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते॥ स्वगोत्रेषु मध्ये कृता अपि दत्तकादयो विधिनैव गोत्रं भजन्ते परन्तु तेषु सापिण्ड्यं नोत्पद्यते सगोत्रेष्वपि सापिण्ड्या नुत्पत्तौ परगोत्रेषु सुतरां सापिण्ड्यानुत्पत्तिरिति। तत्तु पुत्रान्तरवत्सप्तपुरुष सापिण्ड्यप्रसक्तौ निषेधकं सापिण्ड्यप्रयुक्तदशाहाशौचादिप्रतिषेधकं वा। नतु सामान्यतः सापिण्ड्यनिषेधकमुक्तवचनजातात्॥

अथ दत्तकाशौचनिर्णयः। तत्र शुद्धदत्तकस्य तु जनककुले परस्परमशौचं नास्त्येव गोत्रपिण्डनिवृत्त्याऽशौचनिवृत्तेरर्थसिद्धत्वात्। द्व्यामुष्यायणस्य तु उभय त्रैवाशौचमिति। ब्रह्मपुराणे दत्तकस्य स्वयं दत्तः कृत्रिमः क्रीत एव च। अप विद्धाश्च ये पुत्राः भरणीयाः सदैव ते॥ भिन्नगोत्राः पृथक् पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः॥

परासरः॥भिन्नगोत्रः सगोत्रो वा नीतः संस्कृत्यचेच्छया। जनने मरणे तस्य त्र्यहाशौचं विधीयते। तथा औरसं वर्ज्जयित्वा च सर्व्ववर्णेषु सर्व्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात्समानमिति निश्चयः॥ सर्व्वदा उपनयनानन्तरमपि॥ अत्र सगोत्रस्यापि विधिना जनक गोत्रविच्छित्तिपूर्व्वकग्रहीतृगोत्रप्राप्त्याऽसगोत्रदत्तकाविशेषात् त्र्यहाशौचमुक्तं युक्तमेव। तथा दत्तकेऽकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहे न परि वेदनदोषः। न वा दत्तकस्याग्रजसोदरात्पूर्व्वं विवाहकरणेपि क्षतिः॥ ननु शुद्ध दत्तकस्य जनककुले सापिण्ड्यविच्छेदस्य दर्शितत्वात् तत्र विवाहः प्रसज्येत अस

ष्येत च द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरितकन्यासन्ततिपरम्परया विवाहः। मैवं असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दार कर्म्मणि मैथुने। चकारात्पितुरसपिण्डा च इति मनुवचने गृहीतमात्रगोत्र स्यापि दत्तकस्य जनकस्यापि सपिण्डासगोत्रावर्ज्जनाय पितुरिति पदोपा दानात्। नच तथापि दत्तकस्य पितुरपि दत्तकत्वे तत्त्रिपुरुषानन्तरितकन्या सन्ततेर्व्विवाहः केन वार्य्यते पितृसापिण्ड्यसगोत्रत्वयोरभावादिति वाच्यं यतो विवाहेनैतत्सापिण्ड्यमुपयुज्यते किन्तु सर्व्वसाधारणं परिभाषितं पितृपक्षे साप्त पौरुषं मातामहपक्षे पाञ्चपौरुषञ्चेति न काप्यनुपपत्तिः तत्प्रपञ्चस्तु तत्र तत्र वक्तव्य इति॥

अथ दत्तकविभागः॥ तत्र वृहस्पतिः। एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनं॥ शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषां आनृशंस्य दया प्रजीवनम्भरणं॥

तथा यमः। पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः। तेषां षड्बन्धुदायादाः षडदायादबान्धवाः॥ स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः। तृतीयः पुत्त्रिकापुत्रो जातिधर्म्मविदो विदुः॥ पौनर्भवश्चतुर्थस्तु कानीनः पञ्चमः स्मृतः। गृहे च गूढ उत्पन्नः षडेते पिण्डदायिनः॥ अपविद्धः सहो ढश्च दत्तः कृत्रिम एव च। क्रीतश्च पञ्चमः पुत्रो यश्चोपनयते स्वयम्। इत्येते सङ्करोत्पन्नाः षडदायादबान्धवाः॥

नारदः॥ औरसः क्षेत्रजश्चैव पुत्त्रिकापुत्त्र एव च। कानीनश्च सहोढश्च गूढो त्पन्नस्तथैव च॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयं चोपागतः पुत्रा द्वादशैते प्रकीर्त्तिताः॥ तेषां षड्बन्धुदायादाःषडदायादबान्धवाः। पूर्व्वःपूर्व्वः स्मृतो ज्यैष्ठो जघन्यो यो य उत्तरः॥ क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने। ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात्॥ पूर्व्वपूर्व्वाभावे उत्तरोत्त रेषां द्रविणार्हत्वमित्यर्थः। औरसक्षेत्रजपुत्त्रिकापुत्त्रपौनर्भवकानीनगूढोत्पन्न सहोढदत्तकक्रीतस्वयमुपागतापविद्धयत्रक्वचनोत्पादितानभिधाय विष्णुः। तेषां

स्त्वनौरसस्यैते पुत्त्राः दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते ॥ तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः। हीनास्तामुपजीवेयुर्ग्रासाच्छादन सम्भृताः ॥

कात्यायनः॥ उत्पन्ने त्वौरसे पुत्त्रे तृतीयांश हराः स्मृताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः॥ चतुर्थांशहराः स्मृता इति द्वितीयचरणे क्वचित्पाठः। वशिष्ठः तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्यते स चतुर्थभागभागी यद्दिनाभ्युदयिकेषु प्रयुक्तं स्यात्। स प्रतिगृहीतपुत्त्रः आभ्युदयिकेषु यज्ञादिषु यदि औरसेन प्रयुक्तं न स्यात्प्रभूतं धनमितिशेषः॥ अत्र नानाविधमुनिवचनानां परस्परविरोधपरिहारार्थमेवं व्याख्यायते बृहस्पतिवचने औरसमात्रस्य धनभागित्वकथनमन्येषां भरणमात्रकथनञ्चासवर्णक्षेत्रजदत्तकादिविषयं देवलकात्यायनवचनैकवाक्यत्वात्। नारदादिवचनेषु च औरसाद्यभावे क्षेत्रजदत्तकादीनामुक्तस्य ग्रहणविधिरपि सर्व्वधनग्रहणविषयः। अतश्च दत्तकग्रहणानन्तरमौरसोत्पत्तौ तदौरसचतुर्थांशविधिर्वशिष्ठोक्तो दत्तकविषये ज्ञेयः ॥ तथा देवलकात्यायनवचने तृतीयांशग्रहणविधिरत्युत्कृष्टगुणदत्तकविषयोवाच्यः। उपपन्नो गुणैः सर्व्वैः पुत्त्रो यस्य हि दत्त्रिमः। सहरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रत इति मनुवचनैकवाक्यत्वात्। गुणैः जातिविद्याचारैः। समग्रधनभोक्तास्यादौरसोपि जघन्यजः। त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्त्रिकासुत इति ब्रह्मपुराणदर्शनात् क्षेत्रजविषय इत्यन्ये॥ तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येन चादायादत्वमुक्तम्। तत् गुणवदगुणवद्भेदेन समाधेयं॥ पितुरिव बन्धूनां सपिण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वात् अबन्धुदायादत्वं तेषां षड्बन्धुदायादाः पूर्व्वेऽन्ये पितुरेव षट् इत्यत्र पितुरेवेत्येवकारश्रवणात्। एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्व्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तं ॥ एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना सम्बन्धेनाधिकारित्वं तादृशेनैव सम्बन्धेन तादृशदत्तकस्यापि यथा सम्भवमुचितांशभागित्वमवधेयं। एवं धनिनः

[illegible] दत्तकोचितांशभागित्वं [illegible]

